# अथ गरुडपुराणस्याध्यायक्रमेण विषयानुक्रमणिका ।


| अध्यायांकाः | विषयाः | श्लोकांकाः |
|---|---|---|
| १ | ऐहिकामुष्मिकदुःखनिरूपणम् | ६० |
| २ | यममार्गनिरूपणम् ... ... | ८६ |
| ३ | यमयातनानिरूपणम् ... ... | ७१ |
| ४ | नरकप्रदपापनिरूपणम् ... | ६४ |
| ५ | पापचिह्ननिरूपणम् ... ... | ५७ |
| ६ | पापिनां जन्मादिदुःखनिरूपणम् | ४३ |
| | एभिर्मूलषडध्यायैःपापगतिः कथिता | |

| अध्यायांकाः | विषयाः | श्लोकांकाः |
|---|---|---|
| ७ | बभ्रुवाहनप्रेतसंवादः ... | ६९ |
| ८ | आतुरदानम् ... ... ... | ११९ |
| ९ | म्रियमाणकृत्यम् ... ... | ४८ |
| १० | दाहास्थिसंचयकर्मनिरूपणम् | १०७ |
| ११ | दशगात्रविधिः ... ... | ४२ |
| १२ | एकादशाहविधिः ... ... | ८० |

| अध्यायांकाः | विषयाः | श्लोकांकाः |
|---|---|---|
| १३ | सपिंडीशय्यापददाननिरूपणम् | १५७ |
| १४ | धर्मराजनगरनिरूपणम् ... | ८६ |
| १५ | सुकृतिजन्माचरणनिरूपणम् | ९५ |
| १६ | मोक्षधर्मनिरूपणम् ... | १२१ |
| १७ | श्रवणफलम् ... ... | १६ |



स्मरणाद्दुर्गतिहन्ता पूजनयज्ञेन सद्गतेर्दाता । यः परया निजभक्त्या ददाति मुक्तिं स मां हरिः पातु ॥

॥ श्रीगणेशाय नमः ॥ ॥ अथ टीकाकारः समस्तग्रंथार्थमुद्धाटयन् हरिं स्तौति—स्मरणाद्दुर्गतिहर्ता पूजनयज्ञेन सद्गतेर्दाता ॥ यः परया निजभक्त्या ददाति मुक्तिं स मां हरिः पातु ॥ १ ॥ लक्ष्मीलतासमाश्लिष्टं कौस्तुभस्तबकोज्ज्वलम् ॥ स्वर्गापवर्गफलदं हरिं कल्पद्रुमं नुमः ॥ २ ॥ सारात्सारं समुद्धृत्य प्राचीनकृतसंग्रहात् ॥ तत्र चेयं मया टीका यथामति वितन्यते ॥ ३ ॥ अथ सारोद्धारकर्ता शिष्टसंप्रदायानुसारेण मंगलमाचरति—धर्मदृढेति। अत्र वृक्षरूपकेण हरिं निरूपयति—मधुसूदनपादपो जयतीति। यथा पादपो वृक्षः, पद्भिरधःप्रसृतशाखाभिर्जलं पिवतीति पादपः तथैवायं मधुसूदनोऽपि पादप एव। पद्भ्यां चरणाभ्यां पाति संसाराद्रक्षतीति पादपः। 'संसारकूपपतितोत्तरणावलंबं', 'भवाब्धिपोतं वंदे महापुरुष ते चरणारविंदम्' इति भागवतवचनात्। सोऽयं कीदृशः? धर्मदृढबद्धमूलः धर्मोऽत्र अमृतरूपो भगवद्धर्मः 'अद्वेष्टा सर्वभूतानाम्'इत्यारभ्य 'ये तु धर्म्यामृतमिदं

**धर्मदृढबद्धमूलो वेदस्कंधः पुराणशाखाढ्यः ॥ क्रतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति ॥ १ ॥**

यथोक्तं पर्युपासते। श्रद्धाना मत्परमा भक्तास्तेऽतीव मे प्रियाः' इत्यंतेन गीतायां द्वादशाध्यायांतेऽष्टभिः श्लोकैर्भगवतोक्तः स एव दृढं बद्धं मूलं यस्येति। अस्मद्देशभाषायां (जडबंध) इत्युच्यते। अत्रायमभिप्रायः—वृक्षो यथा दृढमूलो हि स्वस्थाने सुस्थिरो भवति प्रचुरतरपवनाद्युपद्रवैरपि ततः स्वस्थानान्नोन्मूलनत्वमुपयाति, तथैवायमपि भगवद्धर्मिहृदये सुनिश्चलो भवति। मूर्च्छनादिप्रवलतरदुःखांतरायैरपि स्वभक्तहृदयान्नापयातीति। तदुक्तं श्रीभागवते—'विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः। प्रणयरशनया धृतांघ्रिपद्मः स भवति भागवतप्रधान उक्तः' इति। पुनः कीदृशः? वेदस्कंधः पुराणशाखाढ्यः वेदाः स्कंधा यस्येति पुराणान्येव शाखास्ताभिराढ्यः युक्तश्चेति। अत्राप्ययं भावः—वृक्षो यथा विस्तृतस्कंधशाखाभिर्दूरतरोऽप्युप

समीप एव दृश्यते, तथैवायमपि वेदपुराणैः प्रकृतिपुरुषयोः परोऽप्युपलभ्यते। यथा वृक्षः स्कंधशाखाभिरेवोपसमागतानां बहुतरफलानि प्रददाति, तथैवायमपि वेदपुराणैस्तच्छ्रोतृवक्तृणां धर्मार्थकाममोक्षफलानि प्रददाति। यथा च वृक्षस्य शाखाः स्कंधेभ्य एव निःसरंति, अथ च तत्संलग्ना एव भवंति, तथा पुराणान्यपि वेदोद्भूतानि तन्मिलितान्येव च संति, नतु तेभ्यः पृथक् 'इतिहासपुराणानि पंचमो वेद उच्यते' इति वचनादिति। पुनः कीदृशः ? ऋतुकुसुमो मोक्षफलः ऋतवो यज्ञा एव कुसुमानि यस्य मोक्षः फलं यस्येति। अत्राप्ययमाशयः–वृक्षाद्यथा कुसुमोद्गमानंतरमेव फलप्राप्तिर्भवति, तथा द्रव्ययज्ञाद्यनुष्ठानैः शुद्धांतःकरणस्यैव ततो मोक्षफललाभो भवतीति। किंचानेन मोक्षफलदातापि मधुसूदनपादप एव, नान्य इत्यपि सूचितम्। तदुक्तं देवैर्मुचुकुंदं प्रति–'वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः। एक एवेश्वरस्तस्य भगवान्विष्णुरव्यय' इति।

**नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ॥ सत्रं स्वर्गायलोकाय सहस्रसममासत ॥ २ ॥**

एवंभूतो मधुसूदनपादपो जयति सर्वोत्कर्षेण वर्तते। अत्रापि सर्वेभ्यो ब्रह्मादिभ्योऽप्यधिकतया वरीवर्तीत्यर्थः। वृक्षो यथा 'वनस्य तस्य सर्वस्य महाकेतुरिव स्थित' इति निरूपणात् सर्ववृक्षेभ्योऽधिको भवति तद्वदिति। इदमार्याछंदः ॥ १ ॥ एवं मंगलं कृत्वा इदानीं कथाप्रस्तावाय सूतशौनकसंवादमवतारयति–नैमिष इति। अनिमिषक्षेत्रे अनिमिषः श्रीविष्णुः, अलुप्तदृष्टित्वात्, तस्य क्षेत्रे नैमिषारण्ये ऋषयः सहस्रं समाः संवत्सराः अनुष्ठानकालो यस्य तत्सहस्रसमं सत्रं यज्ञमासत अकुर्वत। किमर्थं ? स्वर्गायलोकाय स्वर्गे गीयत इति स्वर्गायो हरिः, स एव लोकः भक्तानां निवासस्थानं तस्मै तत्प्राप्तय एव नतु स्वर्गार्थम्। तस्य विनाशित्वेन तुच्छफलत्वादित्यर्थः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥ ॥ १ ॥

प्रातःकाले हुता एव हुता अग्नयो यैस्ते मुनयः दानमानादिभिः सत्कृतं सिंहासने चासीनं सूतं इदं वक्ष्यमाणं आदरात्पप्रच्छुः ॥ ३ ॥ ऋषिभिस्तु अस्मिन्समस्तग्रंथे निरूपितस्य सद्गतिदुर्गतिप्रदस्य धर्माधर्मस्य एक एव प्रश्नः कृतो भवति–कथित इति द्वाभ्याम् । भवता सर्वज्ञेन सम्यक् 'तेऽर्चिरभिसंभवंति' इति श्रुत्युक्तोऽर्चिरादिदेवमार्गः कथितो बहुभिः पुराणैर्निरूपितः । इदानीमिति ॥ ४ ॥ यथा च संसारदुःखादीन्यपि श्रोतुमिच्छाम इति पूर्वेणैव संबंधः । किं तत्क्लेशक्षयसाधनं तैः संसारदुःखैर्यः क्लेश-

त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ॥ सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ ३ ॥ ॥ ऋषय ऊचुः ॥ कथितो भवता सम्यग्देवमार्गः सुखप्रदः ॥ इदानीं श्रोतुमिच्छामो यममार्गं भयप्रदम् ॥ ४ ॥ तथा संसारदुःखानि तत्क्लेशक्षयसाधनम् ॥ ऐहिकामुष्मिकान्क्लेशान्यथावद्वक्तुमर्हसि ॥ ५ ॥ ॥ सूत उवाच ॥ शृणुध्वं भो विवक्ष्यामि यममार्गं सुदुर्गमम् ॥ सुखदं पुण्यशीलानां पापिनां दुःखदायकम् ॥ ६ ॥ यथा श्रीविष्णुना प्रोक्तं वैनतेयाय पृच्छते ॥ तथैव कथयिष्यामि संदेहच्छेदनाय वः ॥ ७ ॥ कदाचित्सुखमासीनं वैकुंठे श्रीहरिं गुरुम् ॥ विनयावनतो भूत्वा पप्रच्छ विनतासुतः ॥ ८ ॥ ॥ गरुड उवाच ॥ भक्तिमार्गो बहुविधः कथितो भवता मम ॥ तथा च कथिता देव भक्तानां गतिरुत्तमा ॥ ९ ॥

स्तस्य क्षयसाधनं च संसारदुःखानां क्लेशस्य क्षयः केन साधनेन भवतीत्यपि श्रोतुमिच्छाम इत्यर्थः ॥ ५ ॥ अत्रोत्तरं श्रीभगवद्गरुडसंवादेन सूत उवाच–शृणुध्वमिति । सुखदं पूर्वादिमार्गं, दुःखदायकं दक्षिणमार्गमित्यग्रे वक्ष्यति ॥ ६ ॥ भगवद्वाक्यस्यातिप्रामाण्यात्संदेहो न कर्तव्य इति भावः ॥७॥ विनयेन अवनतो नम्रः ॥ ८ ॥ उत्तमा गतिः सद्योमुक्तिः क्रममुक्तिश्चेति ॥९॥

श्रुतं सर्वशास्त्रेषु । स्मृतमिति पाठे मुनिभिः कथितम् ॥ १० ॥ हरिस्मरणात्सुलभो मोक्षः अतस्तद्रहिताननुशोचन्नाह—सुगमं पठने कठिनं न भवति ॥ ११ ॥ अतस्त्वामभजतां पापिनाम् ॥ १२ ॥ अत्रोत्तरं समासव्यासाभ्यां श्रीभगवानुवाच षड्भिरध्यायैः–वक्ष्येऽहमित्यादिना । च पुनः येन मार्गेण ये पापिनः नरके यांति तानपि वक्ष्यामीन्वयः ॥ १३ ॥ 'ये हि पापरता' इत्यादिपदानां 'पतंति नरके' इति तृतीयश्लोकेन संबंधः । पापरता निषिद्धाचरणोत्सुकाः । दयाधर्मेति दयानाम प्रत्युपकारापेक्षारहित-

अधुना श्रोतुमिच्छामि यममार्गं भयंकरम् ॥ त्वद्भक्तिविमुखानां च तत्रैव गमनं श्रुतम् ॥ १० ॥
सुगमं भगवन्नाम जिह्वा च वशवर्तिनी ॥ तथापि नरकं यांति धिग्धिगस्तु नराधमान् ॥ ११ ॥
अतो मे भगवन्ब्रूहि पापिनां या गतिर्भवेत् ॥ यममार्गस्य दुःखानि यथा ते प्राप्नुवंति वै ॥ १२ ॥
॥ श्रीभगवानुवाच ॥ वक्ष्येऽहं श्रृणु पक्षींद्र यममार्गं च येन ये ॥ नरके पापिनो यांति श्रृण्वतामपि भीतिदम् ॥ १३ ॥ ये हि पापरतास्तार्क्ष्य दयाधर्मविवर्जिताः ॥ दुष्टसंगाश्च सच्छास्त्रसत्संगतिपराङ्मुखाः ॥ १४ ॥ आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥ आसुरं भावमापन्ना दैवीसंपद्विवर्जिताः ॥ १५ ॥ ॥ ॥ ॥

सर्वभूतहितानुचिंतनता । धर्मो भगवद्धर्मः वर्णाश्रमविहितो वा । दुष्टानां संगो येषां ते तथा सच्छास्त्रादौ पराङ्मुखाश्च ॥ १४ ॥ आत्मनि स्वस्मिन्नेव संभाविताः प्रतिष्ठिता वयमिति मन्यमानाः अत एव स्तब्धा अनम्राः पूज्यानपि न नमंतीत्यर्थः । धनेन यो मानः मदश्च तेन आसुरं भावं 'दंभो दर्पोऽभिमानश्च' इत्यादि भगवतोक्तं । 'दैवीसंपत्', 'अभयं सत्त्वसंशुद्धिः' इत्यादि च गीतायां

प्रोक्ता ॥ १५ ॥ एवंभूता यत्प्राप्नुवंति तच्छृणु—अनेकेति । अनेकेषु परदारपरद्रव्यहरणात्मकेषु मनोरथेषु प्रवृत्तं चित्तं अनेकचित्तं तेन विभ्रांता विक्षिप्ताः । मोहमयेन जालेन समावृता मत्स्या इव सूत्रमयेन जालेन नियंत्रिताः । एवं कामभोगेषु प्रसक्ताः अशुचौ नरके पतंति ॥ १६ ॥ ज्ञानशीलास्तु मोक्षं यांति, पापशीलानामेव यमयातना भवंतीत्याह—ये इति ॥ १७ ॥ ऐहिकं अस्मिँल्लोके भोग्यम् । तत ऐहिकदुःखभोगानंतरम् ॥ १८ ॥ पापशीलानां यमयातनाविवक्षुः प्रथमं मुनिप्रश्नानुसारेण

अनेकचित्तविभ्रांता मोहजालसमावृताः ॥ प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचौ ॥ १६ ॥ ये नरा ज्ञानशीलाश्च ते यांति परमां गतिम् ॥ पापशीला नरा यांति दुःखेन यमयातनाम् ॥ १७ ॥ पापिनामैहिकं दुःखं यथा भवति तच्छृणु ॥ ततस्ते मरणं प्राप्य यथा गच्छंति यातनाः ॥ १८ ॥ सुकृतं दुष्कृतं वाऽपि भुक्त्वा पूर्वं यथार्जितम् ॥ कर्मयोगात्तदा तस्य कश्चिद्व्याधिः प्रजायते ॥ १९ ॥ आधिव्याधिसमायुक्तं जीविताशासमुत्सुकम् ॥ कालो बलीयानहिवदज्ञातः प्रतिपद्यते ॥ २० ॥ ॥ ॥ ॥

तस्यैहिकदुःखान्याह—सुकृतमित्यादिदशभिः । पूर्वं बाल्याद्यवस्थायां सुकृतं भुक्त्वा तदा वार्धक्ये दुष्कृतकर्मयोगाद्व्याधिः स्यादित्यर्थः ॥ १९ ॥ आधिर्मरणभयान्मानसी व्यथा, तेनैव बहुवर्धमानो व्याधिश्च ताभ्यां सम्यग्याऽतिव्याकुलता तया युक्तं तथापि जीवितस्यैव आशायां समुत्सुकं भोगवासनया साभिलाषं तं नरं कालः अहिर्मूषकमिव अज्ञात एवाभिपद्यते । तथा हि— 'प्रमत्तमुच्चैरितिकृत्यचिंतया प्रवृद्धलोभं विषयेषु लालसम् । त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमंतक' इति ॥२०॥

तत्राप्यंतकालेऽपि न जातः निर्वेदो यस्य। स्वयंभृतैः स्वयं पालितैः पुत्रकलत्रादिभिर्म्रियमाणः पुष्यमाणः सन्मरणोन्मुखो भवति ॥ २१ ॥ पापिनामेव अवज्ञा भवति, नतु सुकृतिनामित्याह–आस्त इति। अवमत्या अवज्ञया उपन्यस्तं समीपे प्रक्षिप्तं आहारं गृहपालः श्वा इवाहरन् भुंजान आस्ते। आमयावी रोगी ॥ २२ ॥ कफेन संरुद्धा नाड्यो मार्गभूता यस्य तेन उत्क्रमता प्राणवायुना विवृतनेत्रः। कासश्वासाभ्यां कृत आयासो यस्य। कंठे 'घुरघुर' इति शब्दं करोतीति ॥ २३ ॥ परिवीतः

तत्राप्यजातनिर्वेदो म्रियमाणः स्वयंभृतैः ॥ जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ २१ ॥
आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् ॥ आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ २२ ॥
वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः ॥ कासश्वासकृतायासः कंठे घुरघुरायते ॥ २३ ॥
शयानः परिशोचद्भिः परिवीतः स्वबंधुभिः ॥ वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ २४ ॥
एवं कुटुंबभरणे व्यापृतात्माऽजितेंद्रियः ॥ म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ २५ ॥
तस्मिन्नंतक्षणे ताक्ष्यं दैवी दृष्टिः प्रजायते ॥ एकीभूतं जगत्सर्वं न किंचिद्वक्तुमीहते ॥ २६ ॥

परिवेष्टितः। वाच्यमानोऽपि 'बंधो तात' इत्याहूयमानोऽपि ॥ २४ ॥ एवं व्यापृतात्मा आसक्तचित्तः। उरुवेदनयास्तधीः शतवृश्चिकयुगपद्दशनसदृशया पीडया नष्टमतिः मूर्च्छितः सन् रुदतां रोदनं कुर्वतां स्वानां बंधूनां मध्ये म्रियते मरणं प्राप्नोति ॥२५॥ अंतक्षणे अंतसमये दैवी देवानामिव दिव्यदृष्टिः। यया दृष्ट्या यमदूतानां प्रत्यक्षदर्शनं भवतीत्यर्थः। पुनर्यया सर्वं इहलोकपरलोकरूपं जगत् एकीभूतं स्वसीमासंलग्नमिव प्रजायते। अत आश्चर्यदर्शनान्न किंचिद्वक्तुमिच्छतीत्यर्थः ॥ २६ ॥ ॥

समीपागतैर्याम्यैः हेतुभूतैर्यमदूतैः कृत्वा प्राणाः स्वस्थानात्प्रचलंति ॥ २७ ॥ आतुरस्य म्रियमाणस्य पापिनः क्षणोऽपि कल्पाख्यः महत्कष्टतया कल्पसदृशः । शतवृश्चिकैर्दष्टस्य पुरुषस्य या पीडा भवति सा एव तेनानुभूयते ॥ २८ ॥ अथ फेनमुद्गिरते कफं वमति ॥ २९ ॥ तदा प्राणप्रयाणे । प्राप्तौ सरभसं सक्रोधं ईक्षणं ययोः ॥ ३० ॥ तौ दूतौ दृष्ट्वा शकृन्मूत्रं मलं वा मुंचति ॥ ३१ ॥ पुरुषो जीवः । अंगुष्ठमात्र इति । इदं कंठस्थाने षोडशदलकमले ध्यानस्वरूपं भवति नत्वंगुष्ठमात्रं जीवस्वरूपम्, सर्व-

विकलेंद्रियसंघाते चैतन्ये जडतां गते ॥ प्रचलंति ततः प्राणा याम्यैर्निकटवर्तिभिः ॥ २७ ॥
स्वस्थानाच्चलिते श्वासे कल्पाख्यो ह्यातुरक्षणः ॥ शतवृश्चिकदष्टस्य या पीडा सानुभूयते ॥ २८ ॥
फेनमुद्गिरते सोऽथ मुखं लालाकुलं भवेत् ॥ अधोद्वारेण गच्छंति पापिनां प्राणवायवः ॥ २९ ॥
यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ॥ पाशदंडधरौ नग्नौ दंतैः कटकटायतौ ॥ ३० ॥
ऊर्ध्वकेशौ काककृष्णौ वक्रतुंडौ नखायुधौ ॥ स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुंचति ॥ ३१ ॥
अंगुष्ठमात्रः पुरुषो हाहाकुर्वन्कलेवरात् ॥ तदैव गृह्यते दूतैर्याम्यैः पश्यन्स्वकं गृहम् ॥ ३२ ॥
यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात् ॥ नयतो दीर्घमध्वानं दंड्यं राजभटा यथा ॥ ३३ ॥

शरीरव्यापकत्वात् । अतोऽत्र हृदयाकाशे प्रतिष्ठितत्वात्तत्प्रमाणं पुर्यष्टकवेष्टितं सूक्ष्मशरीरवंतं 'प्रादेशमात्रं पुरुषं वसंत'मितिवज्ज्ञातव्यम् ॥ ३२ ॥ एवं ऐहिकदुःखं निरूप्य इदानीं परलोकदुःखं निरूपयति– यातनादेह इति । यातनाभोगाय प्रारब्धकर्मणा स्वप्नवदुत्थिते यथा भगवता श्रीकृष्णेन विनष्टशरीरमपि गुरोः पुत्रं तत्सदृशमेव यमलोकादानीय गुरवे दत्तमितिवत् स्वस-

दृशे शरीरे आवृत्य निरुद्ध्य तौ दूतौ नयतः गृहीत्वा गच्छतः। अन्यथा केवलस्यैव तस्य सप्तदशावयवलिंगशरीरात्मकस्य पाशैर्गले बंधनायोगात्। अवयवास्तु ज्ञानेंद्रियपंचकं कर्मेंद्रियपंचकं प्राणपंचकं बुद्धिमनसी चेति। इदमेव कर्तृत्वभोक्तृत्वाद्यभिमानेन इहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते इति। दंड्यं सापराधम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ तयोर्दूतयोस्तर्जनैस्ताडनैर्निर्भिन्नं विदीर्णं हृदयं यस्य सः, स्वमघं पापं स्मरन्नार्तः सन् चलतीति द्वितीयश्लोकेनान्वयः ॥३७॥ क्षुत्तृड्भ्यां



तस्यैवं नीयमानस्य दूताः संतर्जयंति च ॥ प्रवदंति भयं तीव्रं नरकाणां पुनः पुनः ॥ ३४ ॥ शीघ्रं प्रचल दुष्टात्मन् यास्यसि त्वं यमालयम् ॥ कुंभीपाकादिनरकांस्त्वां नयावोऽद्य मा चिरम् ॥ ३५ ॥ एवं वाचस्तदा शृण्वन्बंधूनां रुदितं तथा ॥ उच्चैर्हाहेति विलपंस्ताड्यते यमकिंकरैः ॥ ३६ ॥ तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥ पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥ ३७ ॥ क्षुत्तृट्परीतोऽर्कदवानलानिलैः संतप्यमानः पथि तप्तवालुके ॥ कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके ॥ ३८ ॥ तत्र तत्र पतञ्छ्रांतो मूर्च्छितः पुनरुत्थितः ॥ यथा पापीयसा नीतस्तमसा यमसादनम् ॥ ॥ ३९ ॥ त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीयते तत्र मानवः ॥ प्रदर्शयंति दूतास्ता घोरा नरकयातनाः ॥ ४० ॥

परीतो व्याप्तः। तप्ता वालुका यस्मिन्। निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन् तस्मिन् पथि क्षुदादिभिश्चलितुमशक्तोऽपि कशया ताडित एव कृच्छ्रेण चलति ॥ ३८ ॥ अशक्तत्वमेवाह—तत्रेति। तमसा तमोरूपेण यथा यमस्य सादनं गृहं प्रति नीतो भवति ॥ ३९ ॥ पापाधिक्ये द्वाभ्यां मुहूर्ताभ्याम् ॥ ४० ॥ ॥ ॥ ॥

भयं यातनां पुनः स्वगृहं प्रति त्वरितं शीघ्रं दूतैः सहैव खेचरः सन्नाकाशमार्गादेवायातीत्यर्थः ॥ ४१ ॥ देहं प्रति प्रवेष्टुमिच्छन् ॥ ४२ ॥ दत्तं मृत्युस्थानादिषु सुतादिभिः ॥ ४३ ॥ ननु भुक्ते पिंडे कथं तृप्तिं नायातीति चेत्तत्राह–पापिनामिति । नोपतिष्ठंति तृप्तिं न जनयंति । पिंडदानं वर्षपर्यंतं भुंजंति तथापि ॥ ४४ ॥ ननु कृतान्यपि पिंडदानादीनि यदि पापिनां नोपतिष्ठंति तदा किमनेन पिंडदानेन ? कृतमप्यकृतसममेवेति चेदकृतेन तु प्रेतरूपा भवन्तीत्याह–भवन्तीति ॥ ४५ ॥ किंच

मुहूर्तमात्रात्त्वरितं यमं वीक्ष्य भयं पुमान् ॥ यमाज्ञया समं दूतैः पुनरायाति खेचरः ॥ ४१ ॥
आगम्य वासनाबद्धो देहमिच्छन्यमानुगैः ॥ धृतः पाशेन रुदति क्षुत्तृड्भ्यां परिपीडितः ॥ ४२ ॥
भुंक्ते पिंडं सुतैर्दत्तं दानं चातुरकालिकम् ॥ तथापि नास्तिकस्तार्क्ष्य तृप्तिं याति न पातकी ॥ ४३ ॥
पापिनां नोपतिष्ठंति दानं श्राद्धं जलांजलिः ॥ अतः क्षुद्याकुला यांति पिंडदानभुजोऽपि ते ॥ ४४ ॥
भवंति प्रेतरूपास्ते पिंडदानविवर्जिताः ॥ आकल्पं निर्जनारण्ये भ्रमंति बहुदुःखिताः ॥ ४५ ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ अभुक्त्वा यातनां जंतुर्मानुष्यं लभते नहि ॥ ४६ ॥
अतो दद्यात्सुतः पिंडान्दिनेषु दशसु द्विज ॥ प्रत्यहं ते विभज्यंते चतुर्भागैः खगोत्तम ॥ ४७ ॥

प्रायश्चित्तरूपयमयातनाभोगेनैव पापक्षये सति मनुष्यदेहं लभते नान्यथेत्याह–नेति । तथा हि च वक्ष्यति 'एवं दुष्कर्मकर्ता हि भुक्त्वा च नरकान्क्रमात् । मानुष्यं लभते तार्क्ष्य समीभूते शुभाशुभे'इति । अतो मनुष्यजन्मनि संचितसुकृतकर्मोदयवशात् कदाचित्सद्गतिरपि भविष्यति । तस्मादकरणादल्पमपि विहिताचरणमेव युक्तमिति भावः ॥ ४६ ॥ ४७ ॥ ॥

तदेवाह–स प्रेतः । उपजीवति भक्षति ॥ ४८ ॥ पिंडं पिंडजशरीरम् । निष्पन्नः पिंडैरुत्पन्नो देहो यस्य स जंतुर्जीवः बलं मार्गगमनसामर्थ्यम् ॥ ४९ ॥ येन पिंडजदेहेन पथि यममार्गे शुभेषु पुण्यफलेषु अशुभं पापफलमेव भुंक्ते ॥ ५० ॥ पिंडजदेहोत्पत्ति-

भागद्वयं तु देहस्य पुष्टिदं भूतपंचके ॥ तृतीयं यमदूतानां चतुर्थं सोपजीवति ॥ ४८ ॥
अहोरात्रैश्च नवभिः प्रेतः पिंडमवाप्नुयात् ॥ जंतुर्निष्पन्नदेहश्च दशमे बलमाप्नुयात् ॥ ४९ ॥
दग्धे देहे पुनर्देहः पिंडैरुत्पद्यते खग ॥ हस्तमात्रः पुमान्येन पथि भुंक्ते शुभाशुभम् ॥ ५० ॥
प्रथमेऽहनि यः पिंडस्तेन मूर्धा प्रजायते ॥ ग्रीवास्कंधौ द्वितीयेन तृतीयाद्धृदयं भवेत् ॥ ५१ ॥
चतुर्थेन भवेत्पृष्ठं पंचमान्नाभिरेव च ॥ षष्ठेन च कटी गुह्यं सप्तमात्सक्थिनी भवेत् ॥ ५२ ॥
जानुपादौ तथा द्वाभ्यां दशमेऽह्नि क्षुधातृषा ॥ ५३ ॥ पिंडजं देहमाश्रित्य क्षुधाविष्टस्तृषार्दितः ॥ एकादशं द्वादशं च प्रेतो भुंक्ते दिनद्वयम् ॥ ५४ ॥ त्रयोदशेऽहनि प्रेतो यंत्रितो यमकिंकरैः ॥ तस्मिन्मार्गे व्रजत्येको गृहीत इव मर्कटः ॥ ५५ ॥ षडशीतिसहस्राणि योजनानां प्रमाणतः ॥ यममार्गस्य विस्तारो विना वैतरणीं खग ॥ ५६ ॥ अहन्यहनि वै प्रेतो योजनानां शतद्वयम् ॥ चत्वारिंशत्तथा सप्त दिवारात्रेण गच्छति ॥ ५७ ॥ अतीत्य क्रमशो मार्गे पुराणीमानि षोडश ॥ प्रयाति धर्मराजस्य भवनं पातकी जनः ॥ ५८ ॥ ॥ ॥

प्रकारमाह–प्रथमेऽहनीति सार्धद्वाभ्याम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ॥ ॥

षोडशपुरनामान्याह—सौम्यमित्यादिना । धर्मभवनं धार्मिकैर्लभ्यं वक्ष्यमाणं दिव्यसभासहितं । याम्यं पापिभिर्लभ्यं यमयातनारूपं । चकार इत्येव भवेदिति ज्ञापनार्थः । तत्तु अग्रतः षोडशपुरेभ्योऽग्रे भवतीति ॥५९॥६०॥ इति टीकायां प्रथमोध्यायः ॥१॥ ऐहिकामुष्मिकं दुःखं श्रुत्वा संक्षेपतोऽधुना। तदेव विस्तराच्छ्रोतुं गरुडः परिपृच्छति ॥१॥ आमुष्मिकं समासेन प्रोक्तं दुःखं

सौम्यं सौरिपुरं नगेंद्रभवनं गंधर्वशैलागमौ क्रौंचं क्रूरपुरं विचित्रभवनं बह्वापदं दुःखदम् ॥ नानाक्रंदपुरं सुतप्तभवनं रौद्रं पयोवर्षणं शीताढ्यं बहुभीतिधर्मभवनं याम्यं पुरं चाग्रतः ॥ ५९ ॥ याम्यपाशैर्धृतः पापी हाहेति प्ररुदन्पथि ॥ स्वगृहं तु परित्यज्य पुरं याम्यमनुव्रजेत् ॥ ६० ॥ इति श्रीसारोद्धारे गरुडपुराणे पापिनामैहिकामुष्मिकदुःखनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ गरुड उवाच ॥ कीदृशो यमलोकस्य पंथा भवति दुःखदः ॥ तत्र यांति यथा पापास्तन्मे कथय केशव ॥ १ ॥ श्रीभगवानुवाच ॥ यममार्गं महद्दुःखप्रदं ते कथयाम्यहम् ॥ मम भक्तोऽपि तच्छ्रुत्वा त्वं भविष्यसि कंपितः ॥ २ ॥ वृक्षच्छाया न तत्रास्ति यत्र विश्रमते नरः ॥ यस्मिन्मार्गे न चान्नाद्यं येन प्राणान्समुद्धरेत् ॥ ३ ॥ न जलं दृश्यते क्वापि तृषितोऽतीव यः पिबेत् ॥ तपंते द्वादशादित्याः प्रलयांते यथा खग ॥ ४ ॥ ॥

तदेव हि । द्वितीये पुनरध्याये विस्तरेणाह माधवः ॥ २ ॥ कीदृश इति ॥ १ ॥ २ ॥ यममार्गस्य दुःखप्रदत्वमेवाह—वृक्षच्छायेत्यादिवैतरणीनिरूपणांतम् ॥ ३ ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

॥५॥६॥ सरघा मधुमक्षिका ॥७॥८॥९॥१०॥११॥१२॥ क्षारं भस्म। महानिम्नानि महद्गर्तानि वप्रप्ररोहणं उच्चप्रदेशा-



तस्मिन्गच्छति पापात्मा शीतवातेन पीडितः ॥ कंटकैर्विध्यते क्वापि क्वचित्सर्पैर्महाविषैः ॥ ५ ॥
सिंहैर्व्याघ्रैः श्वभिर्घोरैर्भक्ष्यते क्वापि पापकृत् ॥ वृश्चिकैर्दश्यते क्वापि क्वचिद्दह्यति वह्निना ॥ ६ ॥
ततः क्वचिन्महाघोरमसिपत्रवनं महत् ॥ योजनानां सहस्रे द्वे विस्तारायामतः स्मृतम् ॥ ७ ॥
काकोलूकवटगृध्रसरघादंशसंकुलम् ॥ सदावाग्नि च तत्पत्रैश्छिन्नभिन्नः प्रजायते ॥ ८ ॥
क्वचित्पतत्यंधकूपे विकटात्पर्वतात्क्वचित् ॥ गच्छते क्षुरधारासु शंकूनामुपरि क्वचित् ॥ ९ ॥
स्खलत्यंधे तमस्युग्रे जले निपतति क्वचित् ॥ क्वचित्पंके जलौकाढ्ये क्वचित्संतप्तकर्दमे ॥ १० ॥
संतप्तवालुकाकीर्णे ध्मातताम्रमये क्वचित् ॥ क्वचिदंगारराशौ च महाधूमाकुले क्वचित् ॥ ११ ॥
क्वचिदंगारवृष्टिश्च शिलावृष्टिः सवज्रका ॥ रक्तवृष्टिः शस्त्रवृष्टिः क्वचिदुष्णांबुवर्षणम् ॥ १२ ॥
क्षारकर्दमवृष्टिश्च महानिम्नानि च क्वचित् ॥ वप्रप्ररोहणं क्वापि कंदरेषु प्रवेशनम् ॥ १३ ॥
गाढांधकारस्तत्रास्ति दुःखारोहशिलाः क्वचित् ॥ पूयशोणितपूर्णाश्च विष्ठापूर्णा ह्रदा क्वचित् ॥ १४ ॥
मार्गमध्यवहात्युग्रा घोरा वैतरणी नदी ॥ सा दृष्टा दुःखदा किंवा यस्या वार्ता भयावहा ॥ १५ ॥



रोहणम् ॥ १३ ॥ तत्र कंदरे। दुःखारोहाः दुःखेनारोढुमशक्याः ॥ १४ ॥ सा दृष्टा सती दुःखदा भवतीति किं वाच्यम् ॥१५॥

तामेव निरूपयति–शतयोजनेत्येकादशभिः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

शतयोजनविस्तीर्णा पूयशोणितवाहिनी ॥ अस्थिवृंदतटा दुर्गा मांसशोणितकर्दमा ॥ १६ ॥
अगाधा दुस्तरा पापैः केशशैवालदुर्गमा ॥ महाग्राहसमाकीर्णा घोरपक्षिशतैर्वृता ॥ १७ ॥
आगतं पापिनं दृष्ट्वा ज्वालाधूमसमाकुला ॥ क्वथते सा नदी तार्क्ष्य कटाहांतर्घृतं यथा ॥ १८ ॥
कृमिभिः संकुला घोरैः सूचीवक्त्रैः समंततः ॥ वज्रतुंडैर्महागृध्रैर्वायसैः परिवारिता ॥ १९ ॥
शिशुमारैश्च मकरैर्जलौकोमत्स्यकच्छपैः ॥ अन्यैर्जलस्थजीवैश्च पूरिता मांसभेदकैः ॥ २० ॥
पतितास्तत्प्रवाहे च क्रंदंति बहु पापिनः ॥ हा भ्रातः पुत्र तातेति प्रलपंति मुहुर्मुहुः ॥ २१ ॥
क्षुधितास्तृषिताः पापाः पिबंति किल शोणितम् ॥ सा सरिद्रुधिरापूरं वहंती फेनिलं बहु ॥२२॥
महाघोरातिगर्जंती दुर्निरीक्ष्या भयावहा ॥ तस्या दर्शनमात्रेण पापाः स्युर्गतचेतनाः ॥ २३ ॥
बहुवृश्चिकसंकीर्णा सेविता कृष्णपन्नगैः ॥ तन्मध्ये पतितानां च त्राता कोऽपि न विद्यते ॥ २४ ॥
आवर्तशतसाहस्रैः पाताले यांति पापिनः ॥ क्षणं तिष्ठंति पाताले क्षणादुपरिवर्तिनः ॥ २५ ॥
पापिनां पतनायैव निर्मिता सा नदी खग ॥ नापरं दृश्यते तस्या दुस्तरा बहुदुःखदा ॥ २६ ॥
एवं बहुविधक्लेशे यममार्गेऽतिदुःखदे ॥ क्रोशंतश्च रुदंतश्च दुःखिता यांति पापिनः ॥ २७ ॥

 ॥ २५ ॥ २६ ॥ एवं उक्तप्रकारेण बहुविधा क्लेशा यस्मिन् इति । कीदृशो यमलोकस्य पंथा भवति दुःखद इति

प्रथमप्रश्नं समाधाय 'यत्र यांति यथा पापा' इति द्वितीयस्योत्तरमाह यावदध्यायसमाप्ति । एवमिति ॥ २७ ॥ शस्त्राणां कुंत-त्रिशूलादीनाम् । पृष्ठतः प्रोतैरग्रैः ॥ २८ ॥ नासाग्रेत्युष्ट्रवत् ॥ २९ ॥ अयोभारचयं लोहभारसमूहम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ अनुतापमेवाह—मयेति सप्तभिः । देहो यस्यास्तीति देही स्थूलसूक्ष्मदेहाभिमानिन् जीव इत्यनुतापात्स्वय-

पाशेन यंत्रिताः केचित्कृष्यमाणास्तथांकुशैः ॥ शस्त्राग्रैः पृष्ठतः प्रोतैर्नीयमानाश्च पापिनः ॥ २८ ॥ नासा-
ग्रपाशकृष्टाश्च कर्णपाशैस्तथा परे ॥ कालपाशैः कृष्यमाणाः काकैः कृष्यास्तथापरे ॥ २९ ॥ ग्रीवाबाहुषु
पादेषु बद्धाः पृष्ठे च शृंखलैः ॥ अयोभारचयं केचिद्वहंतः पथि यांति ये ॥ ३० ॥ यमदूतैर्महाघोरैस्ताड्य-
मानाश्च मुद्गरैः ॥ वमंतो रुधिरं वक्त्रात्तदेवाश्नंति ते पुनः ॥ ३१ ॥ शोचंति स्वानि कर्माणि ग्लानिं गच्छंति
जंतवः ॥ अतीव दुःखसंपन्नाः प्रयांति यममंदिरम् ॥ ३२ ॥ तथा च स व्रजन्मार्गे पुत्र पौत्र इति ब्रुवन् ॥
हाहेति प्ररुदन्नित्यमनुतप्यति मंदधीः ॥ ३३ ॥ महता पुण्ययोगेन मानुषं जन्म लभ्यते ॥ तत्प्राप्य न कृतो
धर्मः कीदृशं हि मया कृतम् ॥ ३४ ॥ मया न दत्तं न हुतं हुताशने तपो न तप्तं त्रिदशा न पूजिताः ॥
न तीर्थसेवा विहिता विधानतो देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ३५ ॥ न पूजिता विप्रगणाः सुरा-
पगा न चाश्रिताः सत्पुरुषा न सेविताः ॥ परोपकारा न कृताः कदाचन देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ३६ ॥



मेवात्मानं संबोध्याह । मया स्थूलदेहेन दानं न दत्तं न हुतं चेति । अतस्त्वया कर्तृत्वाभिमानिना कृतं यद्विगर्हितं त्यागरूपं कर्म तत्त्वमेव निस्तर । भोक्तृत्वाभिमानिना तत्फलं भुंक्ष्वेत्यर्थः । अत्र त्वयेति लोकोक्त्या परत्वापरत्वनिर्देशः पौनःपुन्यं चेति

॥ ३५ ॥ ३६ ॥ गोविप्राणां वृत्तिराजीविका तदर्थं अणु स्वल्पमपि धनादिकं न अकारि न कृतं मयेति ॥ ३७ ॥ नित्यदानं अन्नादिकं गवाह्निकं एकस्या गोरेकाहतृप्तिजनकं तृणादि । तथाह्निकमिति पाठे आह्निकं 'स्नानं संध्यां जपं होमं स्वाध्यायं देवतार्चनम्' इति श्रुत्युक्तमावश्यकं कर्म । किंच वेदशास्त्राणामर्थं 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इत्यादि यथार्थवचः न प्रमाणितं नास्तिकतया प्रमाणं न कृतम् । ज्ञस्तद्वक्ता ॥ ३८ ॥ हितं ममैव सुखदं भर्तुर्वचः । गुरूणां श्वश्र्वादीनां

जलाशयो नैव कृतो हि निर्जले मनुष्यहेतोः पशुपक्षिहेतवे ॥ गोविप्रवृत्त्यर्थमकारि नाण्वपि देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ३७॥ न नित्यदानं न गवाह्निकं कृतं न वेदशास्त्रार्थवचः प्रमाणितम् ॥ श्रुतं पुराणं न च पूजितो ज्ञो देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ३८ ॥ भर्तुर्मया नैव कृतं हितं वचः पतिव्रतं नैव कदापि पालितम् ॥ न गौरवं क्वापि कृतं गुरूचितं देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ३९ ॥ न धर्मबुद्ध्या पतिरेव सेवितो वह्निप्रवेशो न कृतो मृते पतौ ॥ वैधव्यमासाद्य तपो न सेवितं देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥४०॥ मासोपवासैर्न विशोषितं मया चांद्रायणैर्वा नियमैः सविस्तरैः ॥ नारीशरीरं बहुदुःखभाजनं लब्धं मया पूर्वकृतैर्विकर्मभिः ॥ ४१ ॥

उचितं गौरवं चरणसेवादिकं क्वापि कदाचिदपि न कृतम् ॥ ३९ ॥ पतिसेवनमेव स्त्रीणां परमो धर्म इति बुद्ध्या पतिर्नैव सेवितः । किंतु दांभिका मुंडाः सेविताः ॥ ४० ॥ तपःसेवनमेवाह–मासोपवासैरिति । बहुदुःखानां वैधव्यपराधीनतादीनां पूर्वजन्मनि कृतैर्विकर्मभिर्निषिद्धाचरणैः मया जीवेन नारीशरीरं लब्धमित्यत्र स्थूलशरीराभिप्रायेण जीवस्योक्तिः । किंच सूक्ष्मशरीराभिमानवति जीवे तु वासनानुसारेणैव पुरंजनवन्नरनारीत्वं, नतु वास्तवमिति । तदुक्तं श्रीरामस्वामिना तारां प्रति

'न स्त्री पुमान्वा षंढो वा जीवः सर्वगतोऽव्ययः । एक एवाद्वितीयोऽयमाकाशवदलेपकः' इति ॥ ४१ ॥ एवमनुतापं निरूप्य मार्गगमनं निरूपयति–एवमित्यादि । नदीन्यग्रोधयोः संयोगादस्य पुरस्य सौम्यत्वं रम्यत्वं चेति । अन्यत्र 'वृक्षच्छाया न तत्रास्ति न जलं दृश्यते क्वचित्' इति निरूपणादेतद्विपरीतत्वम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ तत्रत्याः सौम्यपुरवासिनः ॥४६॥

एवं विलप्य बहुशः स स्मरन्पूर्वदैहिकम् ॥ मानुषत्वं मम कुत इति क्रोशन्प्रसर्पति ॥ ४२ ॥ दशसप्तदिनान्येको वायुवेगेन गच्छति ॥ अष्टादशे दिने तार्क्ष्य प्रेतः सौम्यपुरं व्रजेत् ॥ ४३ ॥ तस्मिन्पुरवरे रम्ये प्रेतानां च गणो महान् ॥ पुष्पभद्रा नदी तत्र न्यग्रोधः प्रियदर्शनः ॥ ४४ ॥ पुरे तत्र स विश्रामं प्राप्यते यमकिंकरैः ॥ दारपुत्रादिकं सौख्यं स्मरते तत्र दुःखतः ॥ ४५ ॥ धनानि भृत्यमात्राणि सर्वं शोचति वै यदा ॥ तदा प्रेतांस्तु तत्रत्याः किंकराश्चेदमब्रुवन् ॥ ४६ ॥ क्व धनं क्व सुता जाया क्व सुहृत्क्व च बांधवाः ॥ स्वकर्मोपार्जितं भोक्ता मूढ याहि चिरं पथि ॥ ४७ ॥ जानासि संवलबलं बलमध्वगानां नो संवलाय यतसे परलोकपांथ ॥ गंतव्यमस्ति तव निश्चितमेव तेन मार्गेण यत्र भवति क्रयविक्रयो हि ॥४८॥

चिरं याहि वर्षपर्यंतं गच्छ ॥ ४७ ॥ हे परलोकपांथ ! अध्वगानां ( पान्थानां ) सम्वलं ( पाथेयं ) बलमस्ति नान्यतरदिति त्वं नो जानासि किम् ? ज्ञातं चेत्तस्मै सम्वलाय कथं नो यतसे यत्नं ( दानधर्मादिकं ) न करोषीत्यर्थः । कुतो हीति । यतः यत्र यस्मिन्मार्गे क्रयविक्रयोऽपि नो भवति तेनैव मार्गेण निश्चितं तव गंतव्यमस्तीत्यतोऽत्यावश्यकं पाथेयग्रहणमित्यर्थः । नो इत्यस्य मध्यमणिन्यायेन सर्वत्र संबंधः ॥ ४८ ॥ ॥ ॥ ॥

वालानभिव्याप्येत्यावालं आबालं ख्यातः । बाला अपि जानंतीत्यर्थः । स चासौ मार्गश्चायं न श्रुतः किम्? ॥ ४९ ॥ ५० ॥ गृहात्त्रयोदशेऽहनि मार्गे व्रजति । अष्टादशेऽहनि सौम्यपुरं प्राप्नोति । अत्र सौम्यपुरे मासिकमश्नाति । त्रैपक्षिकस्य च विश्रामाभावादकथितमपि भोजनं मार्गे एव ज्ञातव्यम् ॥ ५१ ॥ तत्र सौरिपुरे कालरूपधृक् कालो यमस्तद्रूपं धरतीति विशेषणात् ।

आबालख्यातमार्गोऽयं नैव मर्त्य श्रुतस्त्वया ॥ पुराणसंभवं वाक्यं किं द्विजेभ्योऽपि न श्रुतम् ॥ ४९ ॥ एवमुक्तस्ततो दूतैस्ताड्यमानश्च मुद्गरैः ॥ निपतन्नुत्पतन्धावन्पाशैराकृष्यते बलात् ॥ ५० ॥ अत्र दत्तं सुतैः पौत्रैः स्नेहाद्वा कृपयाऽथवा ॥ मासिकं पिंडमश्नाति ततः सौरिपुरं व्रजेत् ॥ ५१ ॥ तत्र नाम्नास्ति राजा वै जंगमः कालरूपधृक् ॥ तद्दृष्ट्वा भयभीतोऽसौ विश्रामे कुरुते मतिम् ॥ ५२ ॥ उदकं चान्नसंयुक्तं भुंक्ते तत्र पुरे गतः ॥ त्रैपक्षिके वै यद्दत्तं स तत्पुरमतिक्रमेत् ॥ ५३ ॥ ततो नगेंद्रभवनं प्रेतो याति त्वरान्वितः ॥ वनानि तत्र रौद्राणि दृष्ट्वा क्रंदति दुःखितः ॥ ५४ ॥ निर्घृणैः कृष्यमाणस्तु रुदते च पुनःपुनः ॥ मासद्वयावसाने तु तत्पुरं व्यथितो व्रजेत् ॥ ५५ ॥ भुक्त्वा पिंडं जलं वस्त्रं दत्तं यद्बांधवैरितः ॥ कृष्यमाणः पुनः पाशैर्नीयतेऽग्रे च किंकरैः ॥ ५६ ॥ ॥

यमवज्जंगमस्यापि सौरित्वम् । सूरः सूर्यस्तस्यापत्यं सौरिस्तस्य पुरमतोऽस्य सौरिपुरं नाम ॥ ५२ ॥ ५३ ॥ नगेंद्रभवनं न गच्छंति ते नगाः वृक्षास्तेषा इंद्रा उच्चतरवस्तेषां भवनं स्थानमतोऽस्य नगेंद्रभवनं नाम । तदेवाह—तत्र तत्पुरमार्गे मध्ये च रौद्राणि असिपत्रवनानि दृष्ट्वा क्रंदति ॥ ५४ ॥ ५५ ॥ ५६ ॥ ॥ ॥ ॥

गंधर्वपत्तनं यथा सूर्योदये दृश्यते तथा दूरादेव दृश्यमानं समीपगमनाददृश्यं भवतीति हेतोः अस्य गंधर्वनगरं नाम ॥ ५७ ॥ शैलानां पाषाणानां आगमं पतनं यस्मिन् इति शैलागमं नाम ॥ ५८ ॥ क्रौंचं 'क्रुञ्च हिंसायाम्' इति धातोर्हिंस्रजनैर्व्याप्तत्वा-

मासे तृतीये संप्राप्ते प्राप्य गंधर्वपत्तनम् ॥ तृतीयमासिकं पिंडं तत्र भुक्त्वा प्रसर्पति ॥ ५७ ॥ शैलागमं चतुर्थे च मासि प्राप्नोति वै पुरम् ॥ पाषाणास्तत्र वर्षंति प्रेतस्यो-परि भूरिशः ॥ ५८ ॥ चतुर्थमासिकं पिंडं भुक्त्वा किंचित्सुखी भवेत् ॥ ततो याति पुरं प्रेतः क्रौंचं मासेऽथ पंचमे ॥ ५९ ॥ हस्तदत्तं तदा भुंक्ते प्रेतः क्रौंचपुरे स्थितः ॥ यत्पंचमासिकं पिंडं भुक्त्वा क्रूरपुरं व्रजेत् ॥ ६० ॥ सार्धकैः पंचभिर्मासैर्न्यूनषाण्मा-सिकं व्रजेत् ॥ तत्र दत्तेन पिंडेन घटेनाप्यायितः स्थितः ॥ ६१ ॥ मुहूर्तार्धं तु विश्राम्य कंपमानः सुदुःखितः ॥ तत्पुरं तु परित्यज्य तर्जितो यमकिंकरैः ॥ ६२ ॥ प्रयाति चित्र-भवनं विचित्रो नाम पार्थिवः ॥ यमस्यैवानुजो भ्राता यत्र राज्यं प्रशास्ति हि ॥ ६३ ॥ विलोक्य महाकायं यदा भीतः पलायते ॥ तदा संमुख आगत्य कैवर्ता इदमब्रुवन् ॥ ६४ ॥ वयं ते तर्तुकामाय महावैतरणीं नदीम् ॥ नावमादाय संप्राप्ता यदि ते पुण्यमीदृशम् ॥ ६५ ॥

दस्य क्रौंचपुरं नाम क्रूराणां निर्दयानां पुरमिति ॥ ५९ ॥ ६० ॥ आप्यायितः किंचित्तृप्तः ॥ ६१ ॥ ६२ ॥ चित्र एव विचित्रः जय एव विजय इतिवत् तस्य विचित्रस्य भवनं मंदिरं । यत्र यस्मिन् विचित्रभवने ॥ ६३ ॥ ६४ ॥ ईदृशं नौका-

रोहणयोग्यम् ॥ ६५ ॥ तदेवाह–दानमिति द्वाभ्याम् । या त्वया मर्त्यलोके श्रुता सा इयं तवाग्रे वर्तमाना यस्माद्वितरणाद्गोदानात्तीर्यते तस्माद्धेतोर्वैतरणीति ॥ ६६ ॥ उपसर्पति समीपे आयास्यति । अन्यथा गोदानं विना नेति । हा दैवेत्यदानान्निर्वेदवचनम् ॥ ६७ ॥ निमज्जति निमग्नो भवति ॥ ६८ ॥ निमज्जितस्य पारप्राप्तिप्रकारमाह–तन्मुख इति । बडिशं मत्स्यवेध-

दानं वितरणं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥ इयं सा तीर्यते यस्मात्तस्माद्वैतरणी स्मृता ॥ ६६ ॥
यदि त्वया प्रदत्ता गौस्तदा नौरुपसर्पति ॥ नान्यथेति वचस्तेषां श्रुत्वा हा दैव भाषते ॥ ६७ ॥
तं दृष्ट्वा कथ्यते सा तु तां दृष्ट्वा सोऽतिक्रंदते ॥ अदत्तदानः पापात्मा तस्यामेव निमज्जति ॥ ६८ ॥
तन्मुखे कंटकं दत्वा दूतैराकाशसंस्थितैः ॥ बडिशेन यथा मत्स्यस्तथा पारं प्रणीयते ॥ ६९ ॥
षाण्मासिकं च यत्पिंडं तत्र भुक्त्वा प्रसर्पति ॥ मार्गे स विलपन्याति बुभुक्षापीडितो ह्यलम् ॥ ७० ॥
सप्तमे मासि संप्राप्ते पुरं बह्वापदं व्रजेत् ॥ तत्र भुंक्ते प्रदत्तं यत्सप्तमे मासि पुत्रकैः ॥ ७१ ॥
तत्पुरं तु व्यतिक्रम्य दुःखदं पुरमृच्छति ॥ महद्दुःखमवाप्नोति खे गच्छन्खेचरेश्वर ॥ ७२ ॥ मास्यष्टमे
प्रदत्तं यत्पिंडं भुक्त्वा प्रसर्पति ॥ नवमे मासि संपूर्णे नानाक्रंदपुरं व्रजेत् ॥ ७३ ॥ ॥ ॥

नम् ॥ ६९ ॥ षाण्मासिकं पिंडं भुक्त्वापि बुभुक्षापीडितः इत्यत्रापि । 'तथापि नास्तिकस्तार्क्ष्य तृप्तिं याति न पातकी । पापिनां नोपतिष्ठंति दानं श्राद्धं जलांजलिः' इति पूर्ववज्ज्ञातव्यम् ॥ ७० ॥ बहुविधा क्षुधाद्यापद्यस्मिन्निति बह्वापदं नाम ॥ ७१ ॥ खे क्वचिन्निरालंबमार्गे खगवद्गच्छन् महद्दुःखं प्राप्नोति अतोऽस्य दुःखदं नाम ॥ ७२ ॥ नानागणाः क्रंदंति यस्मिन्निति नानाक्रंदं

नाम ॥ ७३ ॥ नानाप्रकारैराक्रंदंति च ते गणाश्चताननतिदारुणान् दृष्ट्वा स्वयमप्यतिदुःखितः सन् आक्रंदति ॥ ७४ ॥ परितो दावाग्निना उपर्यंगारवृष्ट्या च सुष्ठु अतितप्तं च तद्भवनं चेति सुतप्तभवनं नाम ॥ ७५ ॥ रौद्राणां भयंकराणां पुरमिति रौद्रपुरं नाम ॥ ७६ ॥ पयसां संतप्तजलानां वर्षणं वृष्टिर्यस्मिन्निति पयोवर्षणं नाम पुरमृच्छति । 'ऋच्छ गतौ' इति गच्छतीत्यर्थः

नानाक्रंदगणान्दृष्ट्वा क्रंदमानान्सुदारुणान् ॥ स्वयं च शून्यहृदयः समाक्रंदति दुःखितः ॥ ७४ ॥
विहाय तत्पुरं प्रेतस्तर्जितो यमकिंकरैः ॥ सुतप्तभवनं गच्छेद्दशमे मासि कृच्छ्रतः ॥ ७५ ॥
पिंडदानं जलं तत्र भुक्त्वापि न सुखी भवेत् ॥ मासि चैकादशे पूर्णे पुरं रौद्रं स गच्छति ॥ ७६ ॥
दशैकमासिकं तत्र भुंक्ते दत्तं सुतादिभिः ॥ सार्धे चैकादशे मासि पयोवर्षणमृच्छति ॥ ७७ ॥
मेघास्तत्र प्रवर्षंति प्रेतानां दुःखदायकाः ॥ न्यूनाब्दिकं च यच्छ्राद्धं तत्र भुंक्ते स दुःखितः ॥ ७८ ॥
संपूर्णे तु ततो वर्षे शीताढ्यं नगरं व्रजेत् ॥ हिमाच्छतगुणं तत्र महाशीतं तपत्यपि ॥ ७९ ॥
शीतार्तः क्षुधितः सोऽपि वीक्षते हि दिशो दश ॥ तिष्ठते बांधवः कोऽपि यो मे दुःखं व्यपोहति
॥ ८० ॥ किंकरास्ते वदंत्यत्र क ते पुण्यं हि तादृशम् ॥ भुक्त्वा च वार्षिकं पिंडं धैर्यमालंबते पुनः
॥ ८१ ॥ ततः संवत्सरस्यांते प्रत्यासन्ने यमालये ॥ बहुभीतिपुरे गत्वा हस्तमात्रं समुत्सृजेत् ॥ ८२ ॥

॥ ७७ ॥ ७८ ॥ हिमादपि शतगुणेन शीतेनाढ्यं युक्तं भवतीति शीताढ्यं नाम ॥ ७९ ॥ व्यपोहति दूरीकरोति ॥ ८० ॥ तादृशं यादृशेन एतद्दुःखं याति ॥ ८१ ॥ यमपुरयातनासान्निध्याद्बहुप्रकारा भीर्भयं यस्मिन्निति बहुभीतिपुरं नाम । तस्मिन्नेव

हस्तमात्रं पिंडजं देहं त्यजति ॥ ८२ ॥ वायुरित्युपलक्षणम्, वाय्वादिसप्तदशतत्त्वात्मकलिंगशरीराभिमानी जीवो यातनादेहं प्रारब्धकर्मभोगाय स्वप्नवदुत्थितं स्वसदृशशरीरं समाश्रितः सन् ॥ ८३ ॥ कीदृशो यमलोकस्य पंथाः । यत्र यांति पथेति प्रश्नस्योत्तरमुपसंहरति–एवमिति ॥ ८४ ॥ ८५ ॥ ८६ ॥ इति टीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ यातनादेहमाश्रित्य

अंगुष्ठमात्रो वायुश्च कर्मभोगाय खेचरः ॥ यातनादेहमासाद्य सह याम्यैः प्रयाति च ॥ ८३ ॥ और्ध्व-देहिकदानानि यैर्न दत्तानि काश्यप ॥ एवं कष्टेन ते यांति गृहीता दृढबंधनैः ॥ ८४ ॥ धर्मराजपुरे संति चतुर्द्वाराणि खेचर ॥ तत्रायं दक्षिणद्वारमार्गस्ते परिकीर्तितः ॥ ८५ ॥ अस्मिन्पथि महाघोरे क्षुत्तृषाश्रम-पीडिताः ॥ यथा यांति तथा प्रोक्तं किं भूयः श्रोतुमिच्छसि ॥ ८६ ॥ इति श्रीगरुडपुराणे सारोद्धारे यममार्गनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ गरुड उवाच ॥ ॥ यममार्गमतिक्रम्य गत्वा पापी यमालये ॥ कीदृशीं यातनां भुंक्ते तन्मे कथय केशव ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ ॥ आद्यंतं च प्रव-क्ष्यामि शृणुष्व विनतात्मज ॥ कथ्यमानेऽपि नरके त्वं भविष्यसि कंपितः ॥ २ ॥ चत्वारिंशद्योजनानि चतुर्युक्तानि काश्यप ॥ बहुभीतिपुरादग्रे धर्मराजपुरं महत् ॥ ३ ॥ हाहाकारसमायुक्तं दृष्ट्वा क्रंदति पातकी ॥ तत्क्रंदितं समाकर्ण्य यमस्य पुरचारिणः ॥ ४ ॥ ॥ ॥ ॥

कर्मभोगाय यांति ते । इति श्रुत्वा तु गरुडो यातनामेव पृच्छति ॥ १ ॥ गत्वा यमपुरं पापा यमं दृष्ट्वा सकिंकरम् । भुंजंति यातनामाह तृतीय इति माधवः ॥ २ ॥ आद्यंतमिति आदिमारभ्य अंतपर्यंतम् ॥ ३ ॥ ४ ॥ ॥ ॥

तत्र दक्षिणद्वारे ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ के ते श्रवणा इत्यपेक्षायामाह— ब्रह्मणः पुत्रा इति सप्तभिः। दूराच्छ्रवणे विशेषं ज्ञानं येषां ते दूरदर्शने दूरगतवस्तुप्रत्यक्षकरणे चक्षुर्येषां ते ॥ ९ ॥ पृथक् स्त्रीवाचकं आह्वयं नाम यासां ताः ॥ १० ॥

गत्वा च तत्र ते सर्वे प्रतीहारं वदंति हि ॥ धर्मध्वजः प्रतीहारस्तत्र तिष्ठति सर्वदा ॥ ५ ॥ स गत्वा चित्रगुप्ताय ब्रूते तस्य शुभाशुभम् ॥ ततस्तं चित्रगुप्तोऽपि धर्मराजं निवेदयेत् ॥ ६ ॥ नास्तिका ये नरास्तार्क्ष्य महापापरताः सदा ॥ तांश्च सर्वान्यथायोग्यं सम्यग्जानाति धर्मराट् ॥ ७ ॥ तथापि चित्रगुप्ताय तेषां पापं स पृच्छति ॥ चित्रगुप्तोऽपि सर्वज्ञः श्रवणान्परिपृच्छति ॥ ८ ॥ श्रवणा ब्रह्मणः पुत्राः स्वर्भूपातालचारिणः ॥ दूरश्रवणविज्ञाना दूरदर्शनचक्षुषः ॥ ९ ॥ तेषां पत्न्यस्तथाभूताः श्रवण्यः पृथगाह्वयाः ॥ स्त्रीणां विचेष्टितं सर्वं ता विजानंति तत्त्वतः ॥ १० ॥ नरैः प्रच्छन्नप्रत्यक्षं यत्प्रोक्तं च कृतं च यत् ॥ सर्वमावेदयंत्येव चित्रगुप्ताय ते च ताः ॥ ११ ॥ चारास्ते धर्मराजस्य मनुष्याणां शुभाशुभम् ॥ मनोवाक्कायजं कर्म सर्वं जानंति तत्त्वतः ॥ १२ ॥ एवं तेषां शक्तिरस्ति मर्त्यामर्त्याधिकारिणाम् ॥ कथयंति नृणां कर्म श्रवणाः सत्यवादिनः ॥ १३ ॥ व्रतैर्दानैश्च सत्योक्त्या यस्तोषयति तान्नरः ॥ भवंति तस्य ते सौम्याः स्वर्गमोक्षप्रदायिनः ॥ १४ ॥ पापिनां पापकर्माणि ज्ञात्वा ते सत्यवादिनः ॥ धर्मराजपुरः प्रोक्ता जायंते दुःखदायिनः ॥ १५ ॥ ॥ ॥

ते श्रवणास्ताः श्रवण्यश्चेति ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ॥ ॥ ॥

आदित्यादयोऽपि नरस्य वृत्तं शुभाशुभाचरणं जानंति साक्षितया पश्यंतीत्यर्थः । द्यौरंतरिक्षं तदंतर्ग्रहनक्षत्रादयो वा हृदयं अंतरात्मा अहंकारादीनां देवता । उभे इति संध्यभाव आर्षः । धर्मो हरेर्हृदयादुत्पन्नो यः ॥ १६ ॥ सर्वतः सर्वे ह्येते धर्मराट् चित्रगुप्तादयः तत्र स्वस्थाने स्थिता एव कायस्थं शरीरे स्थितं यत्पापं पुण्यं च तत्सर्वं पश्यंतीत्यर्थः । कायस्थमिति पापपुण्यस्यैव विशेषणं नतु जातिपरम् । ये केचिच्चित्रगुप्तं कायस्थं जातिविशेषं वदंति तन्न । नहि तस्मिन्परे लोके कश्चिज्जातिविशेषोऽस्ति

आदित्यचंद्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ॥ अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ १६ ॥ धर्मराजश्चित्रगुप्तः श्रवणा भास्करादयः ॥ कायस्थं तत्र पश्यंति पापं पुण्यं च सर्वशः ॥ १७ ॥ एवं सुनिश्चयं कृत्वा पापिनां पातकं यमः ॥ आहूय तान्निजं रूपं दर्शयत्यतिभीषणम् ॥ १८ ॥ पापिष्ठास्ते प्रपश्यंति यमरूपं भयंकरम् ॥ दंडहस्तं महाकायं महिषोपरि संस्थितम् ॥ १९ ॥ प्रलयांबुद-निर्घोषं कज्जलाचलसन्निभम् ॥ विद्युत्प्रभायुधैर्भीमं द्वात्रिंशद्भुजसंयुतम् ॥ २० ॥ योजनत्रयविस्तारं वापीतुल्यविलोचनम् ॥ दंष्ट्राकरालवदनं रक्ताक्षं दीर्घनासिकम् ॥ २१ ॥ ॥ ॥

तत्र त्वेका देवजातिरेव । यदि जातिविशेषश्चेत्तदा तु कायस्थः पश्यति इत्येव पाठः स्यात् । स तु कस्मिन्नपि पुस्तके नास्ति अतो यदनवद्यं तत् ज्ञातव्यमिति । किंच चित्रगुप्तस्य द्वादश पुत्राः संति तेषां वंशोद्भवा इमे भूमिस्था अपि कायस्था भवंति इत्यपि बहुमुखगतकथानकं भवति । तद्ग्रंथांतरे लोकव्यवहारे वा यदि भवति चेत् तदा भवतु नाम । अत्रापि मम नाग्रह इति ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ ॥ ॥

तदंतिके यमसमीपे चित्रगुप्तोऽपि भीषणो भयंकर एवास्ति । नतु कुंडलाद्यलंकृत इति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तथैवात्यंतहर्षेणैव भोग्या भोक्तुं योग्या एव ॥ २७ ॥ २८ ॥ संभावितानां पापापराधं राजवद्धर्मराडपि क्षमते । अप्रतिष्ठितं



मृत्युज्वरादिभिर्युक्तश्चित्रगुप्तोऽपि भीषणः ॥ सर्वे दूताश्च गर्जंति यमतुल्यास्तदंतिके ॥ २२ ॥ तं दृष्ट्वा भयभीतस्तु हाहेति वदते खलः ॥ अदत्तदानः पापात्मा कंपते क्रंदते पुनः ॥२३॥ ततो वदति तान्सर्वान्क्रन्दमानांश्च पापिनः ॥ शोचंतः स्वानि कर्माणि चित्रगुप्तो यमाज्ञया ॥ २४ ॥ भो भोः पापा दुराचारा अहंकारप्रदूषिताः ॥ किमर्थमर्जितं पापं युष्माभिरविवेकिभिः ॥ २५ ॥ कामक्रोधाद्युत्पन्नं संगमेन च पापिनाम् ॥ तत्पापं दुःखदं मूढाः किमर्थं चरितं जनाः ॥ २६ ॥ कृतवंतः पुरा यूयं पापान्यत्यंतहर्षिताः ॥ तथैव यातना भोग्याः किमिदानीं पराङ्मुखाः ॥ २७ ॥ कृतानि यानि पापानि युष्माभिः सुबहून्यपि ॥ तानि पापानि दुःखस्य कारणं च न वंचना ॥ २८ ॥ मूर्खेऽपि पंडिते वापि दरिद्रे वा श्रियान्विते ॥ सबले निर्बले वापि समवर्ती यमः स्मृतः ॥ २९ ॥ चित्रगुप्तस्येति वाक्यं श्रुत्वा ते पापिनस्तदा ॥ शोचंतः स्वानि कर्माणि तूष्णीं तिष्ठंति निश्चलाः ॥ ३० ॥ धर्मराजोऽपि तान्दृष्ट्वा चोरवन्निश्चलान्स्थितान् ॥ आज्ञापयति पापानां शास्तिं चैव यथोचिताम् ॥ ३१ ॥ ततस्ते निर्दया दूतास्ताडयित्वा वदंति च ॥ गच्छ पापिन्महाघोरान्नरकानतिभीषणान् ॥३२॥



मामेव मारयति इति मा मंस्था इत्याह–मूर्खेऽपीति ॥ २९ ॥ ३० ॥ चौरो यथा चौर्ये कर्मणि ज्ञाते सति सुनिश्चलो भवति

तद्वदित्यर्थः । शास्तिं प्रायश्चित्तरूपां यातनाम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ तत्र नरकतटे ॥ ३४ ॥ अधोमुखं वद्ध्वा ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ दुष्टचेष्टितं दुष्टाचरणं किमर्थं कृतमिति शेषः ॥ ४० ॥ बलिमिति वैश्वदेवादिकमप्यकृतमित्यर्थः ॥ ४१ ॥

यमाज्ञाकारिणो दूताः प्रचंडचंडकादयः ॥ एकपाशेन तान्बद्ध्वा नयंति नरकान्प्रति ॥ ३३ ॥
तत्र वृक्षो महानेको ज्वलदग्निसमप्रभः ॥ पंचयोजनविस्तीर्ण एकयोजनमुच्छ्रितः ॥ ३४ ॥
तद्वृक्षे शृंखलैर्बद्ध्वाधोमुखं ताडयंति ते ॥ रुदंति ज्वलितास्तत्र तेषां त्राता न विद्यते ॥ ३५ ॥
तस्मिन्वै शाल्मलीवृक्षे लंबंतेऽनेकपापिनः ॥ क्षुत्पिपासापरिश्रांता यमदूतैश्च ताडिताः ॥ ३६ ॥
क्षमध्वं भोऽपराधं मे कृतांजलिपुटा इति ॥ विज्ञापयंति तान्दूतान्पापिष्ठास्ते निराश्रयाः ॥ ३७ ॥
पुनःपुनश्च ते दूतैर्हन्यंते लोहयष्टिभिः ॥ मुद्गरैस्तोमरैः कुंतैर्गदाभिर्मुसलैर्भृशम् ॥ ३८ ॥
ताडनाच्चैव निश्चेष्टा मूर्च्छिताश्च भवंति ते ॥ तथा निश्चेष्टितान्दृष्ट्वा किंकरास्ते वदंति हि ॥ ३९ ॥
भो भो पापा दुराचाराः किमर्थं दुष्टचेष्टितम् ॥ सुलभानि न दत्तानि जलान्यन्नान्यपि क्वचित् ॥ ४० ॥
ग्रासार्धमपि नो दत्तं न श्ववायसयोर्बलिम् ॥ नमस्कृता नातिथयो न कृतं पितृतर्पणम् ॥ ४१ ॥
यमस्य चित्रगुप्तस्य न कृतं ध्यानमुत्तमम् ॥ न जप्तश्च तयोर्मंत्रो न भवेद्येन यातना ॥ ४२ ॥

केचित्त्वया तु यातनानिवर्तकं यमचित्रगुप्तयोर्ध्यानं मंत्रजपं चापि न कृतमित्याहुः । यमस्येति ध्यानमंत्रौ मंत्रमहोदधावुक्तौ । तद्यथा 'पाथःसंयुतमेघसन्निभतनुः प्रद्योतनस्यात्मजो नृणां पुण्यकृतां शुभावहवपुः पापीयसां दुःखकृत् । श्रीमान्दक्षिण-

दिक्पतिर्महिषगो भूषांबरालंकृतो ध्येयः संयमनीपतिः पितृगणस्वामी यमो दंडभृत्' ॥ १ ॥ 'अभ्यस्तोऽयं महामंत्रः सकलाप-
द्विनाशनः । नरकाप्राप्तिकृद्वा स्याद्यमभीतिनिवर्तकः' इति ॥ २ ॥ 'किरीटोज्वलं वस्त्रभूषाभिरामं विचित्रासनासीनमिंदुप्रभा-
स्यम् । नृणां पापपुण्यानि पत्रे लिखंतं भजे चित्रगुप्तं सखायं यमस्य' ॥ ३ ॥ 'सिद्धमंत्रमिमं पुंसां जपतां चित्रगुप्तकः । प्रसन्नो



नापि किंचित्कृतं तीर्थं पूजिता नैव देवताः ॥ गृहाश्रमस्थितेनापि हंतकारोऽपि नो धृतः ॥ ४३ ॥ शुश्रूषिताश्च नो संतो भुंक्ष्व पापफलं स्वकम् ॥ यतस्त्वं धर्महीनोऽसि ततः संताड्यसे भृशम् ॥ ४४ ॥ क्षमापराधं कुरुते भगवान्हरिरीश्वरः ॥ वयं तु सापराधानां दंडदा हि तदाज्ञया ॥ ४५ ॥ एवमुक्त्वा च ते दूता निर्दयं ताडयंति तान् ॥ ज्वलदंगारसदृशाः पतितास्ताडनादधः ॥ ४६ ॥ पतनात्तस्य पत्रैश्च गात्रच्छेदो भवेत्ततः ॥ तानधः पतितान् श्वानो भक्षयंति रुदंति ते ॥ ४७ ॥ रुदंतस्ते ततो दूतैर्मुखमापूर्य रेणुभिः ॥ निबद्ध्य विविधैः पाशैर्हन्यंते केऽपि मुद्गरैः ॥ ४८ ॥ पापिनः केऽपि भिद्यंते क्रकचैः काष्ठवद्द्विधा ॥ क्षिप्त्वा चान्ये धरापृष्ठे कुठारैः खंडशः कृताः ॥ ४९ ॥ अर्धं खात्वाऽवटे केचिद्भिद्यंते मूर्ध्नि सायकैः ॥ अपरे यंत्रमध्यस्थाः पीड्यंते चेक्षुदंडवत् ॥ ५० ॥ ॥

गणयेत्पुण्यं पापं नैव कदाचन' इति ॥ ४ ॥ अत्र रहस्यत्वान्मंत्रौ न लिखितौ तौ गुरुमुखाज्ज्ञातव्यौ ॥ ४२ ॥ नो धृतः न निष्कासितः ॥ ४३ ॥ ४४ ॥ क्षमध्वं भोऽपराधं मे एतस्योत्तरमाह–क्षमापराधमिति । क्षमापराधं तु हरिः कुरुते तदग्रे इदं किमर्थं नोक्तम् । यत्रानंतापराधानां क्षमा स्यादिति भावः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अवटे गर्तेऽर्धं खात्वा कटि-

पर्यंतं रजोभिः पूरयित्वा दृढलक्ष्यं कृत्वेत्यर्थः ॥ ५० ॥ उल्मुकैर्ज्वलत्काष्ठैश्च परीतः समंताद्वेष्टयित्वा भृशमत्यंतं ते ध्मायंते भस्त्राभिर्धमंते ॥ ५१ ॥ वटो वटकस्तद्वत्प्रक्षिप्यंते ॥ ५२ ॥ शलाकया ऊर्ध्वाधोमुखं क्रियंते ॥ ५३ ॥ ५४ ॥ आमिषगृध्नुभिर्मांसलुब्धैः । शिरोदेशे मस्तके, 'शिरोद्देशे' इति पाठे नाडीस्थाने । अत्र काका वज्रतुंडैर्मस्तकं विदार्य नाडीं चोत्पाट्य तदंतर्गत-

केचित्प्रज्वलमानैस्तु सांगारैः परितो भृशम् ॥ उल्मुकैर्वेष्टयित्वा च ध्मायंते लोहपिंडवत् ॥ ५१ ॥ केचिद्घृतमये पाके तैलपाके तथा परे ॥ कटाहक्षिप्तवटवत्प्रक्षिप्यंते यतस्ततः ॥ ५२ ॥ केचिन्मत्तगजेंद्राणां क्षिप्यंते पुरतः पथि ॥ बद्ध्वा हस्तौ च पादौ च क्रियंते केऽप्यधोमुखाः ॥ ५३ ॥ क्षिप्यंते केऽपि कूपेषु पात्यंते केऽपि पर्वतात् ॥ निमग्नाः कृमिकुंडेषु तुद्यंते कृमिभिः परे ॥ ५४ ॥ वज्रतुंडैर्महाकाकैर्गृध्रैरामिषगृध्नुभिः ॥ निष्कुष्यंते शिरोदेशे नेत्रे वास्ये च चंचुभिः ॥ ५५ ॥ ऋणं वै प्रार्थयंत्यन्ये देहि देहि धनं मम ॥ यमलोके मया दृष्टो धनं मे भक्षितं त्वया ॥ ५६ ॥ एवं विवदमानानां पापिनां नरकालये ॥ छित्त्वा संदंशकैर्दूता मांसखंडान्ददंति च ॥ ५७ ॥ एवं संताड्य तान्दूताः संकृष्य यमशासनात् ॥ तामिस्रादिषु घोरेषु क्षिप्यंते नरकेषु च ॥ ५८ ॥ नरका दुःखबहुलास्तत्र वृक्षसमीपतः ॥ तेष्वस्ति यन्महद्दुःखं तद्वाचामप्यगोचरम् ॥ ५९ ॥ ॥ ॥

मज्जां मांसं च भक्षयंतीत्यर्थः । किंच नेत्रे चापि निष्कुष्यंते ॥ ५५ ॥ ५६ ॥ ५७ ॥ यथा नृपस्याधिकारिणः प्रथमं सापराधं संताड्य पश्चात्कारागारे नृपाज्ञया प्रक्षिपंति तद्वदत्रापीत्याह—एवमिति ॥ ५८ ॥ अगोचरं वर्णयितुमशक्यं स्वभोगवे-

वेद्यत्वादतः किं वर्णयामीति ॥ ५९ ॥ धौरेयाः प्रधानाः, अतिदुःखदा इत्यर्थः ॥ ६० ॥ तानेवाह–तामिस्र इति त्रिभिः । ग्रंथविस्तरभयान्नामनिरुक्तिर्न कृता ॥ ६१ ॥ ६२ ॥ ६३ ॥ नानाप्रकाराणां पापानां विपाकाः फलरूपाश्चेति ॥ ६४ ॥ ६५ ॥ मिथःसंगेन परस्परासक्त्या ॥ ६६ ॥ यातनामुपसंहरति–एवमिति । उभयं कुटुंबं स्वदेहं च । प्रेत्य परलोके ॥ ६७ ॥ उपा-



चतुरशीतिलक्षाणि नरकाः संति खेचर ॥ तेषां मध्ये घोरतमा धौरेयास्त्वेकविंशतिः ॥ ६० ॥ तामिस्रो लोहशंकुश्च महारौरवशाल्मली ॥ रौरवः कुड्मलः कालसूत्रकः पूतिमृत्तिकः ॥ ६१ ॥ संघातो लोहितोदश्च सविषः संप्रतापनः ॥ महानिरयकाकोलौ संजीवनमहापथौ ॥ ६२ ॥ अवीचिरंधतामिस्रः कुंभीपाकस्तथैव च ॥ संप्रतापननामैकस्तपनस्त्वेकविंशतिः ॥ ६३ ॥ नानापीडामयाः सर्वे नानाभेदैः प्रकल्पिताः ॥ नानापाकविपाकाश्च किंकरौघैरधिष्ठिताः ॥ ६४ ॥ एतेषु पतिता मूढाः पापिष्ठा धर्मवर्जिताः ॥ तत्र भुंजंति कल्पांते तास्ता नरकयातनाः ॥ ६५ ॥ यास्तामिस्रांधतामिस्रा रौरवाद्याश्च यातनाः ॥ भुंक्ते नरो वा नारी वा मिथः संगेन निर्मिताः ॥ ६६ ॥ एवं कुटुंबं बिभ्राण उदरंभर एव वा ॥ विसृज्येहोभयं प्रेत्य भुंक्ते तत्फलमीदृशम् ॥ ६७ ॥ एकः प्रपद्यते ध्वांतं हित्वेदं स्वं कलेवरम् ॥ कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम् ॥ ६८ ॥ ॥

र्जितं धनं भुंजंति बहवः । कर्तैव तु नरकं यातीत्याह–एक इति । भूतद्रोहेण यद्भृतं पोषितं तदिदं कलेवरं स्थूलशरीरं इहैव हित्वा कुशलादितरत्पापं तदेव पाथेयं भोग्यं यस्य स कर्तैव ध्वांतं अंधतमः नरकं प्रपद्यते, नतु भोक्तारः । तथा च स्मृतिः

'देशग्रामकुलानि स्युर्भोगभांजि कृतादिषु। कलौ तु केवलं कर्ता फलभुक् पुण्यपापयोः' इति ॥ ६८ ॥ ननु पापमेव विहाय किं न गच्छेत्तत्राह–दैवेनेति। तस्य कुटुंबपोषकस्य शमलं पापं दैवेन ईश्वरेण प्रापितं भुंक्ते। अतः पापत्यागे न स्वतंत्र इति भावः ॥ ६९ ॥ ननु कुटुंबपोषणं तु विहितमेव, तत्राह–केवलेन ह्यधर्मेण इति। तमसो नरकस्य चरमं पदं अंतिमस्थानं महद्दुःखप्रदमित्यर्थः ॥ ७० ॥ पुनर्मनुष्यशरीरप्राप्तिकारणमाह–नरलोकस्य मनुष्यदेहप्राप्तेरधस्तादर्वाक् यावत्यो यातनाः। 'आदि'शब्देन सूकरादि-

दैवेनासादितं तस्य शमलं निरये पुमान् ॥ भुंक्ते कुटुंबपोषस्य हृतद्रव्य इवातुरः ॥ ६९ ॥ केवलेन ह्यधर्मेण कुटुंबभरणोत्सुकः ॥ याति जीवोऽधतामिस्रं चरमं तमसः पदम् ॥ ७० ॥ अधस्तान्नरलोकस्य यावतीर्यातनादयः ॥ क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ७१ ॥ इति श्रीगरुडपुराणे सारोद्धारे यमयातनानिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ गरुड उवाच ॥ कैर्गच्छंति महामार्गे वैतरण्यां पतंति कैः ॥ कैः पापैर्नरके यांति तन्मे कथय केशव ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ सदैवाकर्मनिरताः शुभकर्मपराङ्मुखाः ॥ नरकान्नरकं यांति दुःखाद्दुःखं भयाद्भयम् ॥ २ ॥ ॥ ॥

योनयो यास्ताः सर्वाः क्रमेण संप्राप्य भोगेन क्षीणपापः शुचिः सन् अत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥ ७१ ॥ इति टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ पापान्येव मनुष्याणां यातनादुःखदानि च। इति श्रुत्वा तु गरुडः पापान्येव विपृच्छति ॥ १ ॥ शास्त्रेषु बहुधा प्रोक्तं नरकप्रदपातकम्। तस्य सारं समुद्धृत्य चतुर्थे प्राह माधवः ॥ २ ॥ कैरिति ॥ १ ॥ अत्र दुःखस्यानंतरं सुखमित्यागमापायित्वं न, किंतु पापिनां दुःखभयानंतरं दुःखभयमेवेति निरूपयन् श्रीभगवानुवाच–सदैवेति ॥ २ ॥ ॥

तत्पुरं प्रति ॥ ३ ॥ अस्मिन्दक्षिणमार्गे ॥ ४ ॥ 'ब्रह्मघ्नाः' इत्यादिपदानां 'गच्छंति यममार्गे ही'त्यष्टमेन संबंधः ॥ ५ ॥ ६ ॥ ७ ॥ दोषानेव गृह्णाति । गुणानां श्लाघां न करोति । समत्सरास्तदुत्कर्षमसहमानाः । नीचेष्वेव अनुरागः स्नेहो येषाम् ॥ ८ ॥



धर्मराजपुरे यांति त्रिभिर्द्वारैस्तु धार्मिकाः ॥ पापास्तु दक्षिणद्वारमार्गेणैव व्रजंति तत् ॥ ३ ॥ अस्मिन्नेव महादुःखे मार्गे वैतरणी नदी ॥ तत्र ये पापिनो यांति तानहं कथयामि ते ॥ ४ ॥ ब्रह्मघ्नाश्च सुरापाश्च गोघ्ना वा बालघातकाः ॥ स्त्रीघाती गर्भपाती च ये च प्रच्छन्नपापिनः ॥ ५ ॥ ये हरंति गुरोर्द्रव्यं देवद्रव्यं द्विजस्य वा ॥ स्त्रीद्रव्यहारिणो ये च बालद्रव्यहराश्च ये ॥ ६ ॥ ये ऋणं न प्रयच्छंति ये वै न्यासापहारकाः ॥ विश्वासघातका ये च सविषान्नेन मारकाः ॥ ७ ॥ दोषग्राही गुणाश्लाघी गुणवत्सु समत्सराः ॥ नीचानुरागिणो मूढाः सत्संगतिपराङ्मुखाः ॥ ८ ॥ तीर्थसज्जनसत्कर्मगुरुदेवविनिंदकाः ॥ पुराणवेदमीमांसान्यायवेदांतदूषकाः ॥ ९ ॥ हर्षिता दुःखितं दृष्ट्वा हर्षिते दुःखदायकाः ॥ दुष्टवाक्यस्य वक्तारो दुष्टचित्ताश्च ये सदा ॥ १० ॥ न शृण्वंति हितं वाक्यं शास्त्रवार्तां कदापि न ॥ आत्मसंभाविताः स्तब्धा मूढाः पंडितमानिनः ॥ ११ ॥ एते चान्ये च बहवः पापिष्ठा धर्मवर्जिताः ॥ गच्छंति यममार्गे हि रोदमाना दिवानिशम् ॥ १२ ॥ यमदूतैस्ताड्यमाना यांति वैतरणीं प्रति ॥ तस्यां पतंति ये पापास्तानहं कथयामि ते ॥ १३ ॥ ॥



॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ॥ ॥ ॥

॥ १४ ॥ १५ ॥ १६ ॥ एतावद्दानं तुभ्यं प्रदास्यामिति प्रतिश्रुत्य प्रतिज्ञाय । यथार्थं यथाप्रतिज्ञं आगच्छ दानं दास्यामीत्याहूय पश्चान्नास्ति तुभ्यं न ददामीति ब्रूयात् ॥ १७ ॥ स्वदत्तस्यापि दानस्य यो हर्ता । अनुतापकः वृथैव दत्तमिति पश्चात्तापकरः, दुर्वाक्यैर्विप्रस्यैव संतापकरो वा । दाने अन्येन दत्ते सति 'स्वयं हर्तापहर्ता चे'त्यादिपदानां 'वैतरण्यां पतंति' इत्यनेन संबंधः ॥ १८ ॥ यज्ञेषु द्रव्ययज्ञादिषु विघ्नकर्ता हरेः कथाया निवारणकर्ता । क्षेत्रमित्युपलक्षणं ग्रामस्यापि । परंपरागतसीमा-

मातरं येऽवमन्यंते पितरं गुरुमेव च ॥ आचार्यं चापि पूज्यं च तस्यां मज्जंति ते नराः ॥ १४ ॥
पतिव्रतां साधुशीलां कुलीनां विनयान्विताम् ॥ स्त्रियं त्यजंति ये द्वेषाद्वैतरण्यां पतंति ते ॥ १५ ॥
सतां गुणसहस्रेषु दोषानारोपयंति ये ॥ तेष्ववज्ञां च कुर्वंति वैतरण्यां पतंति ते ॥ १६ ॥ ब्राह्मणाय प्रतिश्रुत्य यथार्थं न ददाति यः ॥ आहूय नास्ति यो ब्रूयात्तयोर्वासश्च संततम् ॥ १७ ॥ स्वयं दत्तापहर्ता च दानं दत्त्वाऽनुतापकः ॥ परवृत्तिहरश्चैव दाने दत्ते निवारकः ॥ १८ ॥ यज्ञविध्वंसकश्चैव कथाभंगकरश्च यः ॥ क्षेत्रसीमाहरश्चैव यश्च गोचरकर्षकः ॥ १९ ॥ ब्राह्मणो रसविक्रेता यदि स्याद्वृषलीपतिः ॥ वेदोक्तयज्ञादन्यत्र स्वात्मार्थं पशुमारकः ॥ २० ॥ ॥ ॥

हर्ता । गोचरकर्षकः गावश्चरंति यस्मिन्निति गोचरं वनं भाषायां 'बीड' इति प्रसिद्धं तस्मिन्कृषिकर्ता ॥ १९ ॥ वृषल्यः स्मृतौ कथिताः—'वेश्याऽसती च दासी च कुमारी स्याद्रजस्वला । या च संग्रहणी भार्या वृषल्यः पंच संस्मृताः' । वेश्या इत्यत्र वंध्येति पाठः क्वचित् । अन्यत्र यज्ञं विना । वेदोक्तयज्ञे तु पशुहिंसा विहितैव । तथा च श्रुतिः—'देवा यद्यज्ञं तन्वाना अबध्न-

न्पुरुषं पशुम्' इति स्मृतिश्च–'यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयंभुवा । अतस्त्वां घातयाम्यत्र यस्माद्यज्ञे वधोऽवधः' इति ॥ २० ॥ उच्छृंखलः निरंकुशस्वभावः ॥ २१ ॥ कपिलाया गोरिदं कापिलम् ॥ २२ ॥ कामुकः कामाभिलाषी सतीनां पतिव्रतानां दूषकः बलात् शीलभ्रष्टकरः ॥ २३ ॥ २४ ॥ दूताः पुनः प्रत्यागत्य वैतरण्यां तान्क्षिपंति ॥ २५ ॥ ननु पूर्वं नर-

ब्रह्मकर्मपरिभ्रष्टो मांसभोक्ता च मद्यपः ॥ उच्छृंखलस्वभावो यः शास्त्राध्ययनवर्जितः ॥ २१ ॥ वेदाक्षरं पठेच्छूद्रः कापिलं यः पयः पिबेत् ॥ धारयेद्ब्रह्मसूत्रं च भवेद्वा ब्राह्मणीपतिः ॥ २२ ॥ राजभार्याभिलाषी च परदारापहारकः ॥ कन्यायां कामुकश्चैव सतीनां दूषकश्च यः ॥ २३ ॥ एते चान्ये च बहवो निषिद्धाचरणोत्सुकाः ॥ विहितत्यागिनो मूढा वैतरण्यां पतंति ते ॥ २४ ॥ सर्वं मार्गमतिक्रम्य यांति पापा यमालये ॥ पुनर्यमाज्ञयागत्य दूतास्तस्यां क्षिपंति तान् ॥ २५ ॥ या वै धुरंधरा सर्वधौरेयाणां खगाधिप ॥ अतस्तस्यां प्रक्षिपंति वैतरण्यां च पापिनः ॥ २६ ॥ कृष्णा गौर्यदि नो दत्ता नोर्ध्वदेहक्रियाः कृताः ॥ तस्यां भुक्त्वा महद्दुःखं यांति वृक्षं तटोद्भवम् ॥ २७ ॥ कूटसाक्ष्यप्रदातारः कूटधर्मपरायणाः ॥ छलेनार्जनसंसक्ताश्चौर्यवृत्त्या च जीविनः ॥ २८ ॥ ॥

केष्वेव किं न पात्यते अत आह–येति । धौरेयाणां सर्वनरकेषु मुख्यानां एकविंशतिनरकाणां धुरं यातनाप्रयासं धारयति इति धुरंधरा एका एव सर्वनरकाणां दुःखप्रदेत्यर्थः । अतो नरकान् विहाय पूर्वं वैतरण्यां क्षिपंतीति भावः ॥ २६ ॥ दानाद्युपायं विनैव तस्यां दुःखं भजंतीत्याह–कृष्णेति ॥ २७ ॥ कूटसाक्ष्यं मिथ्यासाक्ष्यं विवदतां मध्ये ये मिथ्यावादिनं संतमयं सत्यं

वदतीति ब्रुवंति ते। कूटधर्मो वेदबाह्यधर्मः छलेन वंचनादिना अर्जने धनसंचये कूटसाक्ष्यादयो वृक्षे ताडनं भुंजते इति तृतीयेन संबंधः ॥ २८ ॥ अति वृक्षानुच्चतरतरून्। वनं फलप्रधानम्। आरामः पुष्पप्रधानम् ॥ २९ ॥ ३० ॥ ३१ ॥ नास्तिका जगत्कर्ता ईश्वरो नास्तीति वादिनः। दानादिफलं परलोके नास्तीति वादिनो वा। भिन्ना दूरीकृता परंपरागतधर्ममर्यादा यैस्ते कदर्यास्तु स्मृतावुक्ताः 'आत्मानं धर्मकृत्यं च पुत्रान्दारांश्च पीडयेत्। देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः'। 'प्राये-

छेदयंत्यतिवृक्षांश्च वनारामविभंजकाः ॥ व्रतं तीर्थं परित्यज्य विधवाशीलनाशकाः ॥ २९ ॥ भर्तारं दूषयेन्नारी परं मनसि धारयेत् ॥ इत्याद्याः शाल्मलीवृक्षे भुंजते बहुताडनम् ॥ ३० ॥ ताडनात्पतिता दूताः क्षिपंति नरकेषु तान् ॥ पतंति तेषु ये पापास्तानहं कथयामि ते ॥ ३१ ॥ नास्तिका भिन्नमर्यादाः कदर्या विषयात्मकाः ॥ दांभिकाश्च कृतघ्नाश्च ते वै नरकगामिनः ॥ ३२ ॥ कूपानां च तडागानां वापीनां देवसद्मनाम् ॥ प्रजागृहाणां भेत्तारस्ते वै नरकगामिनः ॥ ३३ ॥ विसृज्याश्नंति ये दाराञ्छिशून्भृत्यांस्तथा गुरून् ॥ उत्सृज्य पितृदेवेज्यां ते वै नरकगामिनः ॥ ३४ ॥ ॥

णार्थः कदर्याणां न सुखाय कदाचन। इह चात्मोपतापाय परत्र नरकाय च' इत्यर्थः। विषयेष्वेव आत्मा मनो येषां ते दांभिका मिथ्याचाराः। लोकवंचनाय तपोजपादौ प्रवृत्ता इति। कृतघ्नाः कृतोपकारनाशकाः ॥ ३२ ॥ ३३ ॥ विसृज्येति द्वेषात्कृपणतया वा दारादीन्परित्यज्य अश्नंति। एकाकिन एव मिष्टान्नं भुंजंति, ये च पितृदेवानां इज्यां यागं उत्सृज्य वैश्वदेवं अकृत्वा। 'पितृदेवेज्यम्' इति पाठे तु पितृदेवानां ईज्यं हविः उत्सृज्य तस्मै अनिवेद्य अश्नंति ये ते वै नरकगामिनः ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ प्रजां संतानं हीयते च्युतो भवति ॥ ३७ ॥ ३८ ॥ अनन्यशरणाश्च ताः स्त्रियश्च तासां स्वकीयानां वैरेण ऋतुदानं न ददति ये ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ केशो भगस्तं विक्रीणंति ताः व्यभिचारोपजीविन्य इत्यर्थः

शंकुभिः सेतुभिः काष्ठैः पाषाणैः कंटकैस्तथा ॥ ये मार्गमुपरुंधंति ते वै नरकगामिनः ॥ ३५ ॥ शिवं शिवां हरिं सूर्यं गणेशं सद्गुरुं बुधम् ॥ न पूजयंति ये मंदास्ते वै नरकगामिनः ॥ ३६ ॥ आरोप्य दासीं शयने विप्रो गच्छेदधोगतिम् ॥ प्रजामुत्पाद्य शूद्रायां ब्राह्मण्यादेव हीयते ॥ ३७ ॥ न नमस्कारयोग्यो हि स कदापि द्विजोऽधमः ॥ तं पूजयंति ये मूढास्ते वै नरकगामिनः ॥ ३८ ॥ ब्राह्मणानां च कलहं गोयुद्धं कलहप्रियाः ॥ न वर्जयन्त्यनुमोदंते ते वै नरकगामिनः ॥ ३९ ॥ अनन्यशरणस्त्रीणामृतुकालव्यतिक्रमम् ॥ ये प्रकुर्वंति विद्वेषात्ते वै नरकगामिनः ॥ ४० ॥ येऽपि गच्छंति रागांधा नरा नारीं रजस्वलाम् ॥ पर्वस्वप्सु दिवा श्राद्धे ते वै नरकगामिनः ॥ ४१ ॥ ये शारीरं मलं वह्नौ प्रक्षिपंति जलेऽपि च ॥ आरामे पथि गोष्ठे वा ते वै नरकगामिनः ॥ ४२ ॥ शस्त्राणां ये च कर्तारः शराणां धनुषां तथा ॥ विक्रेतारश्च ये तेषां ते वै नरकगामिनः ॥ ४३ ॥ चर्मविक्रयिणो वेश्याः केशविक्रेयकाः स्त्रियः ॥ विषविक्रयिणः सर्वे ते वै नरकगामिनः ॥ ४४ ॥ अनाथं नानुकंपंति ये सतां द्वेषकारकाः ॥ विनापराधं दंडंति ते वै नरकगामिनः ॥ ४५ ॥ आशया समनुप्राप्तान्ब्राह्मणानर्थिनो गृहे ॥ न भोजयंति पाकेऽपि ते वै नरकगामिनः ॥ ४६ ॥ ॥

॥ ४४ ॥ ४५ ॥ पाके सत्यपीति शेषः ॥ ४६ ॥ ॥ ॥ ॥ ॥

केऽपि विश्वासं न कुर्वंतीत्यविश्वस्ताः । जिह्माः कुटिलाः ॥ ४७ ॥ नियमान् संध्यावंदनकृच्छ्रचांद्रायणादीन् समुपादाय प्रति-
ज्ञया स्वीकृत्य ये अजितेंद्रिया अदांतमनसस्त्यजंति ते ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ शीतला छाया यस्मि-

सर्वभूतेष्वविश्वस्तास्तथा तेषु विनिर्दयाः ॥ सर्वभूतेषु जिह्मा ये ते वै नरकगामिनः ॥ ४७ ॥
नियमान्समुपादाय ये पश्चादजितेंद्रियाः ॥ विग्लापयंति तान्भूयस्ते वै नरकगामिनः ॥ ४८ ॥
अध्यात्मविद्यादातारं नैव मन्यंति ये गुरुम् ॥ तथा पुराणवक्तारं ते वै नरकगामिनः ॥ ४९ ॥
मित्रद्रोहकरा ये च प्रीतिच्छेदकराश्च ये ॥ आशाच्छेदकरा ये च ते वै नरकगामिनः ॥ ५० ॥
विवाहं देवयात्रां च तीर्थसार्थान्विलुंपति ॥ स वसेन्नरके घोरे तस्मान्नावर्तनं पुनः ॥ ५१ ॥
अग्निं दद्यान्महापापी गृहे ग्रामे तथा वने ॥ स नीतो यमदूतैश्च वह्निकुंडेषु पच्यते ॥ ५२ ॥
अग्निना दग्धगात्रोऽसौ यदा छायां प्रयाचते ॥ नीयते च तदा दूतैरसिपत्रवनांतरे ॥ ५३ ॥
खड्गतीक्ष्णैश्च तत्पत्रैर्गात्रच्छेदो यदा भवेत् ॥ तदोचुः शीतलच्छाये सुखनिद्रां कुरुष्व भोः ॥ ५४ ॥
पानीयं पातुमिच्छन्वै तृषार्तो यदि याचते ॥ पानार्थं तैलमत्युष्णं तदा दूतैः प्रदीयते ॥ ५५ ॥
पीयतां भुज्यतां पानमन्नमूचुस्तदेति ते ॥ पीतमात्रेण तेनैव दग्धांत्रा निपतंति ते ॥ ५६ ॥
कथंचित्पुनरुत्थाय प्रलपंति सुदीनवत् ॥ विवशा उच्छ्वसंतश्च ते वक्तुमपि नाशकन् ॥ ५७ ॥

न्निति शीतलच्छायं वनं तस्मिन्निति कटाक्षः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ॥ ॥ ॥

॥ ५८ ॥ यावदाभूतसंप्लवं महाप्रलयपर्यंतं कुलालाग्निकुंडे घटवत्पच्यंते ॥५९॥ ननु 'दिनांते ब्रह्मणः प्रोक्तो नाशो लोकत्रयस्य वै । परार्धद्वितीयांतेऽपि ब्रह्मांडस्यापि संक्षयः' ॥ १ ॥ इति पुराणवचनात् कथं महाप्रलयपर्यंतं पापिनां नरके निवासो भवति ब्रह्मणो दिनांते एव तेषां विनाशः स्यादिति चेत्तत्राह–तस्येति । ते पापिनः पुनरुत्पत्तिसमये तत्र नरकेष्वेव उत्पद्यंते तस्य पापस्य अक्षयं फलं भुंजंति । तदुक्तं बृहन्नारदीये–'निर्गुणोऽपि निरानंदः सर्वात्मा सर्वभावनः । चराचरात्मकं विश्वं यथापूर्वमकल्प-

इत्येवं बहुशस्ताक्ष्र्य यातनाः पापिनां स्मृताः ॥ किमेतैर्विस्तरात्प्रोक्तैः सर्वशास्त्रेषु भाषितैः ॥ ५८ ॥ एवं वै क्लिश्यमानास्ते नरा नार्यः सहस्रशः ॥ पच्यंते नरके घोरे यावदाभूतसंप्लवम् ॥ ५९ ॥ तस्याक्षयं फलं भुक्त्वा तत्रैवोत्पद्यते पुनः ॥ यमाज्ञया महीं प्राप्य भवंति स्थावरादयः ॥ ६० ॥ वृक्षगुल्मलतावल्लीगिरय-श्च तृणानि च ॥ स्थावरा इति विख्याता महामोहसमावृताः ॥ ६१ ॥ कीटाश्च पशवश्चैव पक्षिणश्च जले-चराः ॥ चतुरशीतिलक्षेषु कथिता देवयोनयः ॥ ६२ ॥ एताः सर्वाः परिभ्रम्य ततो यांति मनुष्यताम् ॥ मानुषेऽपि श्वपाकेषु जायंते नरकागताः ॥ तत्रापि पापचिह्नैस्ते भवंति बहुदुःखिताः ॥ ६३ ॥ ॥

यत् । स्थावराद्याश्च विप्रेंद्रा यत्र यत्र व्यवस्थिताः । तस्मात्कृतानां पापानां पुण्यानां चैव सत्तमाः । अवश्यमेव भोक्तव्यं सर्वथा ह्यक्षयं फलम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'ति । स्मृतिश्च 'निशांते पुनरुत्थाय प्रलये यल्लयं गतम् । ब्रह्मा जगत्रयं सर्वं यथापूर्वमकल्पयत्' इति । श्रुतिश्च 'धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः' इति । अतः स्वर्गनरकस्थाः स्वस्वस्थानेष्वेवोत्पद्य शुभाशुभकर्मफलमक्षयमेव भुंजंतीत्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ॥

॥ ६४ ॥ इति टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ श्रुत्वा च पापचिह्नानि गलत्कुष्ठादिकानि च ॥ इदानीं गरुडस्तानि यथापापं विपृच्छति ॥ १ ॥ मनुजैः पातकं कर्म कृतं यत्पूर्वजन्मनि ॥ हरिस्तत्सूचकान्याह पापचिह्नानि पंचमे ॥ २ ॥ १–२ ॥ ॥ ३ ॥ पुलिंदो भिल्लः । अगम्या स्वगोत्रजा । दुश्चर्मा गजचर्मा । गुरुतल्पगः गुरुकुलस्त्रीकामुकः ॥ ४ ॥ अतिरक्तांगः

गलत्कुष्ठाश्च जन्मांधा महारोगसमाकुलाः ॥ भवंत्येवं नरा नार्यः पापचिह्नोपलक्षिताः ॥ ६४ ॥ इति श्रीगरुडपुराणे सारोद्धारे नरकप्रदपापचिह्ननिरूपणो नाम चतुर्थोऽध्यायः ॥ ४ ॥ गरुड उवाच ॥ येन येन च पापेन यद्यचिह्नं प्रजायते ॥ यां यां योनिं च गच्छंति तन्मे कथय केशव ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ यैः पापैर्यांति यां योनिं पापिनो नरकागताः ॥ येन पापेन यच्चिह्नं जायते मम तच्छृणु ॥ २ ॥ ब्रह्महा क्षयरोगी स्याद्गोघ्नः स्यात्कुब्जको जडः ॥ कन्याघाती भवेत्कुष्ठी त्रयश्चांडालयोनिषु ॥ ३ ॥ स्त्रीघाती गर्भपाती च पुलिंदो रोगवान्भवेत् ॥ अगम्यागमनात्षंढो दुश्चर्मा गुरुतल्पगः ॥ ४ ॥ मांसभोक्ताऽतिरक्तांगः श्यावदंतस्तु मद्यपः ॥ अभक्ष्यभक्षको लौल्याद्ब्राह्मणः स्यान्महोदरः ॥ ५ ॥ अदत्त्वा मिष्टमश्नाति स भवेद्गलगंडवान् ॥ श्राद्धेऽन्नमशुचिं दत्त्वा चित्रकुष्ठी प्रजायते ॥ ६ ॥

कुष्ठरोगविशेषः । श्यावदंतः स्वभावतः कृष्णदंतः । 'शावदंत' इति पाठे तु शावा अतिसूक्ष्मा भोजने बहुदुःखदा दंता यस्येति शावदंतः । श्यावदंतैस्तु किंचिद्दुःखानुभवो नास्ति, अतः पापचिह्नानामतिदुःखप्रदत्वाच्छावदंत इत्येव युक्तम्, लौल्यादजितेंद्रियत्वात् । महोदरः जलोदररोगी ॥ ५ ॥ ६ ॥ ॥ ॥ ॥

अपस्मारी मृगीरोगी ॥ ७ ॥ ८ ॥ पादेन ताडनात्खंजः । पद्म्यामाघातात्पंगुः । गद्गदः अस्फुटवक्ता । तस्यानृतवादस्य श्रोता ॥ ९ ॥ पलविक्रेता मांसविक्रयी ॥ १० ॥ कुनखी निसर्गतः कुत्सितनखः कुष्ठिसदृशः ॥ ११ ॥ आखुर्मूषकः । धान्यं सतुषान्नम्



गुरोर्गीर्वणावमानादपस्मारी भवेन्नरः ॥ निंदको वेदशास्त्राणां पांडुरोगी भवेद्ध्रुवम् ॥ ७ ॥
कूटसाक्षी भवेन्मूकः काणः स्यात्पंक्तिभेदकः ॥ अनोष्ठः स्याद्विवाहघ्नो जन्मांधः पुस्तकं हरेत् ॥ ८ ॥
गोब्राह्मणपदाघातात्खंजः पंगुश्च जायते ॥ गद्गदोऽनृतवादी स्यात्तच्छ्रोता बधिरो भवेत् ॥ ९ ॥
गरदः स्याज्जडोन्मत्तः खल्वाटोऽग्निप्रदायकः ॥ दुर्भगः पलविक्रेता रोगवान्परमांसभुक् ॥ १० ॥
हीनजातौ प्रजायेत रत्नानामपहारकः ॥ कुनखी स्वर्णहर्ता स्याद्धातुमात्रहरोऽधनः ॥ ११ ॥
अन्नहर्ता भवेदाखुः शलभो धान्यहारकः ॥ चातको जलहर्ता स्याद्विषहर्ता च वृश्चिकः ॥ १२ ॥
शाकं पत्रं शिखी हृत्वा गंधांश्छुच्छुंदरी शुभान् ॥ मधु दंशः पलं गृध्रो लवणं च पिपीलिका ॥ १३ ॥
तांबूलफलपुष्पादिहर्ता स्याद्वानरो वने ॥ उपानत्तृणकार्पासहर्ता स्यान्मेषयोनिषु ॥ १४ ॥
यश्च रौद्रोपजीवी च मार्गे सार्थान्विलुंपति ॥ मृगयाव्यसनी यस्तु छागः स्याद्व्धिकगृहे ॥ १५ ॥
यो मृतो विषपानेन कृष्णसर्पो भवेद्गिरौ ॥ निरंकुशस्वभावः स्यात्कुंजरो निर्जने वने ॥ १६ ॥

॥ १२ ॥ शाकं हृत्वा शिखी मयूरः स्यात् । हृत्वेत्येतस्य सर्वत्र संबंधः । शुभान्मृगमदादीन् गंधान् हृत्वा छुच्छुंदरी स्यात्, भाषायां 'चामचेड' इति । मधु हृत्वा दंशः मधुमक्षिका स्यात् ॥ १३ ॥ १४ ॥ रौद्रेण हिंस्रकर्मणा उपजीविकाकर्ता । सार्थान्

यात्रिकजनसमूहान् ॥ १५ ॥ १६ ॥ विश्वं सर्वजातीयं प्राणिजातं देवा देवता यस्मिंस्तद्विश्वेदेवम् । स्वार्थे तद्धितः । वैश्वदेवं नाम कर्म, तदकर्तारः; सर्वेषां कुलालरजकादीनामप्यन्नं भक्षयंति ते सर्वभक्षाः, 'गणान्नं गणिकान्नं च भुक्त्वा चांद्रायणं चरेत्' इति निषेधात् । सर्वं अभक्ष्यमपि भक्षयंतीति वा । अशुचि हेयोपादेयपरीक्षामकृत्वा ये भुंजंति तेऽपि ॥ १७ ॥ १८ ॥ अयाज्यान्

वैश्वदेवमकर्तारः सर्वभक्षाश्च ये द्विजाः ॥ अपरीक्षितभोक्तारो व्याघ्राः स्युर्निर्जने वने ॥ १७ ॥
गायत्रीं न स्मरेद्यस्तु यो न संध्यामुपासते ॥ अंतर्दुष्टो बहिःसाधुः स भवेद्ब्राह्मणो बकः ॥ १८ ॥
अयाज्ययाजको विप्रः स भवेद्ग्रामसूकरः ॥ खरो वै बहुयाजित्वात्काको निर्मंत्रभोजनात् ॥ १९ ॥
पात्रे विद्यामदाता च बलीवर्दो भवेद्द्विजः ॥ गुरुसेवामकर्ता च शिष्यः स्याद्गोखरः पशुः ॥ २० ॥
गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः ॥ अरण्ये निर्जले देशे जायते ब्रह्मराक्षसः ॥ २१ ॥
प्रतिश्रुतं द्विजे दानमदत्त्वा जंबुको भवेत् ॥ सतामसत्कारकरः फेत्कारोऽग्निमुखो भवेत् ॥ २२ ॥
मित्रध्रुग्गिरिगृध्रः स्यादुलूकः क्रयवंचनात् ॥ वर्णाश्रमपरीवादात्कपोतो जायते वने ॥ २३ ॥
आशाच्छेदकरो यस्तु स्नेहच्छेदकरस्तु यः ॥ यो द्वेषात्स्त्रीपरित्यागी चक्रवाकश्चिरं भवेत् ॥ २४ ॥

याजयितुमनर्हान् पतितयवनादीन् याजयतीति । 'अयाच्ययाचक' इति पाठेऽप्ययमेवार्थः । बहून् दक्षिणालोभेन याजयतीति बहुयाजी, तस्य भावस्तत्त्वं तस्मात् । निर्मंत्रं अमृतोपस्तरणादिमंत्रं विना, आमंत्रणरहितं वा ॥ १९ ॥ २० ॥ हुं तुं कृत्य । गुरुमवज्ञायेत्यर्थः ॥ २१ ॥ २२ ॥ मित्रध्रुक् मित्रद्रोही, गिरौ गृध्रः, क्रये व्यवहारे परीवादान्निंदनात् ॥ २३ ॥ २४ ॥ ॥

॥ २५ ॥ भर्त्सते धिक्करोति ॥ २६ ॥ २७ ॥ २८ ॥ अप्राप्तयौवना अजातरजस्का, तस्याः संगात् ॥ २९ ॥ ३० ॥ वृषली व्याख्याता ॥ ३१ ॥ ऐकादशाहं आ एकादशाहमिति छेदः । एकादशाहपर्यंतं सूतकान्नमित्यर्थः ॥ ३२ ॥ देवलकमाह—हव्य-



मातापितृगुरुद्वेषी भगिनीभ्रातृवैरकृत् ॥ गर्भे योनौ विनष्टः स्याद्यावद्योनिसहस्रशः ॥ २५ ॥ श्वश्र्वो-र्गालिप्रदा नारी नित्यं कलहकारिणी ॥ सा जलौका च यूका स्याद्भर्तारं भर्त्सते च या ॥ २६ ॥ स्वपतिं च परित्यज्य परपुंसानुवर्तिनी ॥ वल्गुली गृहगोधा स्याद्द्विमुखी वाऽथ सर्पिणी ॥ २७ ॥ यः स्वगोत्रोपघाती च स्वगोत्रस्त्रीनिषेवणात् ॥ तरक्षुः शल्लको भूत्वा ऋक्षयोनिषु जायते ॥ २८ ॥ तापसीगमनात्कामी भवेन्मरुपिशाचकः ॥ अप्राप्तयौवनासंगाद्भवेदजगरो वने ॥ २९ ॥ गुरुदारा-भिलाषी च कृकलासो भवेन्नरः ॥ राज्ञीं गत्वा भवेद्दुष्टो मित्रपत्नीं च गर्दभः ॥ ३० ॥ गुदगो विड्व-राहः स्याद्वृषः स्याद्वृषलीपतिः ॥ महाकामी भवेद्यस्तु स्यादश्वः कामलंपटः ॥ ३१ ॥ मृतस्यैकाद-शाहं तु भुंजानः श्वा विजायते ॥ लभेद्देवलको विप्रो योनिं कुक्कुटसंज्ञकाम् ॥ ३२ ॥ द्रव्यार्थं देवता-पूजां यः करोति द्विजाधमः ॥ स वै देवलको नाम हव्यकव्येषु गर्हितः ॥ ३३ ॥ महापातकजा-न्घोरान्नरकान्प्राप्य दारुणान् ॥ कर्मक्षये प्रजायंते महापातकिनस्त्विह ॥ ३४ ॥ खरोष्ट्रमहिषीणां हि ब्रह्महा योनिमृच्छति ॥ वृकश्वानशृगालानां सुरापा यांति योनिषु ॥ ३५ ॥ ॥ ॥



कव्येषु गर्हितः पितृदेवकार्येषु भोजयितुमनर्हः ॥ ३३ ॥ महापापिनां योनिमाह त्रिभिः ॥ ३४ ॥ ३५ ॥ ॥ ॥

॥ ३६ ॥ न्यासस्य स्वगृहे धृतस्य परधनस्यापहरणेन ग्रहणेन ॥ ३७ ॥ प्रसंगाद्ब्रह्मस्वहरणे दोषमाह–ब्रह्मस्वमिति चतुर्भिः । प्रणयात् कपटस्नेहात् । भुक्तं भक्षितं ब्रह्मस्वं ब्राह्मणधनं आसप्तमं सप्तमपुरुषपर्यंतं कुलं दहति पुण्यलोकैः सह दग्धं करोति । बलाद्भुक्तं सत् आचंद्रतारापर्यंतं भाविकुलं दहति । वंशोच्छेदं करोतीत्यर्थः ॥ ३८ ॥ कः । न कोऽपीत्यर्थः ॥ ३९ ॥ विशीर्यंते

कृमिकीटपतंगत्वं स्वर्णस्तेयी समाप्नुयात् ॥ तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः ॥ ३६ ॥ परस्य योषितं हृत्वा न्यासापहरणेन च ॥ ब्रह्मस्वहरणाच्चैव जायते ब्रह्मराक्षसः ॥ ३७ ॥ ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ॥ बलात्कारेण चौर्येण दहत्याचंद्रतारकम् ॥ ३८ ॥ लोहचूर्णाश्मचूर्णं च विषं च जरयेन्नरः ॥ ब्रह्मस्वं त्रिषु लोकेषु कः पुमाञ्जरयिष्यति ॥ ३९ ॥ ब्रह्मस्वरसपुष्टानि वाहनानि बलानि च ॥ युद्धकाले विशीर्यंते सैकताः सेतवो यथा ॥ ४० ॥ देवद्रव्योपभोगेन ब्रह्मस्वहरणेन च ॥ कुलान्यकुलतां यांति ब्राह्मणातिक्रमेण च ॥ ४१ ॥ स्वमाश्रितं परित्यज्य वेदशास्त्रपरायणम् ॥ अन्येभ्यो दीयते दानं कथ्यतेऽयमतिक्रमः ॥ ४२ ॥ ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ॥ ज्वलंतमग्निमुत्सृज्य नहि भस्मनि हूयते ॥ ४३ ॥ ॥ ॥

पलायंते ॥ ४० ॥ अकुलतामुच्छेदताम् ॥ ४१ ॥ अतिक्रमं व्याख्यायते–स्वमिति ॥ ४२ ॥ विप्रे स्वमाश्रिते वेदवर्जिते कुपात्रे सति अतिक्रमदोषो नास्तीत्यर्थः । ज्वलंतं दूरे दीप्यमानं भस्मनिकटवर्तिनि यथा दूरादाहृत्य अग्नावेव हवनमुचितं तथा निकटवर्तिनं मूढं परित्यज्य विदेशादानीय पात्रे प्रदेयमिति भावः ॥ ४३ ॥ ॥ ॥ ॥

पात्रं परित्यज्य कुपात्रदानस्य फलमाह–अतीति ॥ ४४ ॥ ४५ ॥ अपकर्षति हरति ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ उपसंह-



अतिक्रमे कृते ताक्ष्र्यं भुक्त्वा च नरकान्क्रमात् ॥ जन्मांधः सन्दरिद्रः स्यान्न दाता किंतु याचकः
॥ ४४ ॥ स्वदत्तां परदत्तां वा यो हरेच वसुंधराम् ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ४५ ॥
स्वयमेव च यो दत्त्वा स्वयमेवापकर्षति ॥ स पापी नरकं याति यावदाभूतसंप्लवम् ॥ ४६ ॥
दत्त्वा वृत्तिं भूमिदानं यत्नतः परिपालयेत् ॥ न रक्षति हरेद्यस्तु स पंगुः श्वाऽभिजायते ॥ ४७ ॥
विप्रस्य वृत्तिकरणे लक्षधेनुफलं भवेत् ॥ विप्रस्य वृत्तिहरणान्मर्कटः श्वा कपिर्भवेत् ॥ ४८ ॥
एवमादीनि चिह्नानि योनयश्च खगेश्वर ॥ स्वकर्मविहिता लोके दृश्यंतेऽत्र शरीरिणाम् ॥ ४९ ॥
एवं दुष्कर्मकर्तारो भुक्त्वा निरययातनाम् ॥ जायंते पापशेषेण प्रोक्तास्वेतासु योनिषु ॥ ५० ॥
ततो जन्मसहस्रेषु प्राप्य तिर्यक्शरीरताम् ॥ दुःखानि भारवहनोद्भवादीनि लभंति ते ॥ ५१ ॥
पक्षिदुःखं ततो भुक्त्वा वृष्टिशीतातपोद्भवम् ॥ मानुषं लभते पश्चात्समीभूते शुभाशुभे ॥ ५२ ॥
स्त्रीपुंसोस्तु प्रसंगेन भूत्वा गर्भे क्रमादसौ ॥ गर्भादिमरणांतं च प्राप्य दुःखं म्रियेत्पुनः ॥ ५३ ॥
समुत्पत्तेर्विनाशश्च जायते सर्वदेहिनाम् ॥ एवं प्रवर्तितं चक्रं भूतग्रामे चतुर्विधे ॥ ५४ ॥ ॥



रति–एवमिति ॥ ५० ॥ तिर्यक्शरीरतां पशुपक्षिदेहभावम्, भारवाहनेन उद्भवो येषां तानि पशुदेहे लभंति ॥ ५१ ॥ वृष्ट्यादि-
भवदुःखं पक्षिदेहे इति ॥ ५२ ॥ ५३ ॥ ५४ ॥ ॥ ॥ ॥

॥ ५५ ॥ ५६ ॥ ५७ ॥ इति टीकायां पंचमोऽध्यायः ॥ ५ ॥ पातकी नरकं गत्वा जायते निर्धने कुले ॥ इति श्रुत्वा तु गरुडस्तज्जन्म परिपृच्छति ॥ १ ॥ प्रोक्तमामुष्मिकं दुःखं येषामध्यायपंचकैः ॥ तेषां षष्ठेऽधुना प्राह जन्मकर्म च केशवः ॥ २ ॥ कथमिति ॥ १ ॥ प्रसंगेन संगमेन निरुद्धे गर्भे एव स्थिते सति ॥ २ ॥ यस्मिन् ऋतुमध्ये हत्या चतुर्थांशेन अस्ति तस्मिन्नेव

घटीयंत्रं यथा मर्त्या भ्रमंति मम मायया ॥ भूमौ कदाचिन्नरके कर्मपाशसमावृताः ॥ ५५ ॥ अदत्तदानाच्च भवेद्दरिद्रो दरिद्रभावाच्च करोति पापम् ॥ पापप्रभावान्नरके प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ ५६ ॥ अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ ५७ ॥ इति श्रीगरुडपुराणे सारोद्धारे पापचिह्ननिरूपणो नाम पंचमोऽध्यायः ॥ ५ ॥ ॥ गरुड उवाच ॥ कथमुत्पद्यते मातुर्जठरे नरकागतः ॥ गर्भादिदुःखं यद्भुंक्ते तन्मे कथय केशव ॥ १ ॥ विष्णुरुवाच ॥ स्त्रीपुंसोस्तु प्रसंगेन निरुद्धे शुक्रशोणिते ॥ यथाऽयं जायते मर्त्यस्तथा वक्ष्याम्यहं तव ॥ २ ॥ ऋतुमध्ये हि पापानां देहोत्पत्तिः प्रजायते ॥ इंद्रस्य ब्रह्महत्यास्ति यस्मिंस्तस्मिन्दिनत्रये ॥ ३ ॥ प्रथमेऽहनि चांडाली द्वितीये ब्रह्मघातिनी ॥ तृतीये रजकी ह्येता नरकागतमातरः ॥ ४ ॥ कर्मणा दैवनेत्रेण जंतुर्देहोपपत्तये ॥ स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ ५ ॥ ॥ ॥ ॥ ॥

दिनत्रये पापिनां देहोत्पत्तिरित्यन्वयः ॥ ३ ॥ ब्रह्मघातिनी महापातकयुक्तेवास्पर्शा एतास्त्रिमलिनदिनांतर्गताश्चांडाल्यादिसमा हि नरकेभ्य आगता मातरो भवंति । एतास्वेव नरकगता उत्पद्यंत इत्यर्थः ॥ ४ ॥ दैवं ईश्वरस्तदेव नेतृ प्रवर्तकं यस्य

तद्दैवनेत्रं तेन पूर्वकृतेन कर्मणा जंतुर्जीवः। देहस्य प्राप्तये पुंसः पुरुषस्य रेतसः शुक्रस्य कणो बिंदुस्तस्याश्रयः सन् स्त्रिया उदरं प्रविष्टो भवति। अत्रायं विशेषः–'शुक्रशोणितसंयोगात्पिंडोत्पत्तिः प्रजायते॥ रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेत्पुमान्॥ १॥ समाने द्रव्यसंयोगे तृतीया प्रकृतिर्भवेत्॥ विभक्ते रेतसि प्रायो भवेद्युग्ममपि क्वचित्'॥ २॥ इति॥ ५॥ 'भूत्वा गर्भे क्रमात्' इति पूर्वसूचितक्रमेणैव गर्भोत्पत्तिप्रकारमाह–कललमिति चतुर्भिः। कललं शुक्रशोणितं मिश्रितं भवति, ततो बुद्बुदं वर्तुलं भवति, पेशी मांसपिंडाकारं भवति, कर्कंधूः बदरीफलं, तदिव कठिनं भवति; अंडं वा योन्यंतरे॥ ६॥ बाह्वाद्यंगानां

कललं त्वेकरात्रेण पंचरात्रेण बुद्बुदम्॥ दशाहेन तु कर्कंधूः पेश्यंडं वा ततः परम्॥ ६॥
मासेन तु शिरो द्वाभ्यां बाह्वंगाद्यंगविग्रहः॥ नखलोमास्थिचर्माणि लिंगच्छिद्रोद्भवस्त्रिभिः
॥७॥ चतुर्भिर्धातवः सप्त पंचभिः क्षुत्तृडुद्भवः॥ षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे
॥८॥ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते॥ शेते विण्मूत्रयोर्गर्ते स जंतुर्जंतुसंभवे॥९॥ कृमि-
भिः क्षतसर्वांगः सौकुमार्यात्प्रतिक्षणम्॥ मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः॥ १०॥

विग्रहो विभागः लिंगच्छिद्राणि च तेषामुद्भवः॥ ७॥ जरायुणा गर्भवेष्टनेन वीतः प्रावृतः॥ ८॥ मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्च एधमाना धातवो यस्य, जंतूनां संभवो यस्मिन्नसंमते दुर्गंधेर्गर्ते शेते। तथा च मार्कंडेयपुराणे–'नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते। स्त्रीणां तथांत्रसुषिरे सा निबद्धोपजायते॥ क्रमंते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा। तैराप्यायितदेहोऽसौ जंतुर्वृद्धिमुपैति वा' इति॥ ९॥ 'कथमुत्पद्यंते' इति प्रश्नोत्तरमुक्त्वा 'गर्भादिदुःखं यद्भुक्ते' इत्यस्योत्तरमाह–तत्रत्यैर्गर्भ-

स्थितैः क्षुधितैः खादद्भिः कृमिभिः सौकुमार्यात् कोमलत्वेन क्षतानि सर्वांगानि यस्य ॥ १० ॥ उल्बणैः दुःसहैः सर्वांगेषु उत्थिता वेदना यस्य आस्ते इत्युत्तरेणान्वयः ॥ ११ ॥ उल्बेन जरायुणा भुग्नं वक्रं पृष्ठं शिरोधरा ग्रीवा च यस्य ॥ १२ ॥ दैवात्पूर्वकर्मवशाल्लब्धा स्मृतिर्येन स दीर्घं दुरंतं अनुच्छ्वासं यथा भवति तथा । तत्र स्थितः सन् सुखं नैव विंदते इति ॥ १३ ॥ नाथमानो

कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ॥ मातृभुक्तैरुपस्पृष्टः सर्वांगोत्थितवेदनः ॥ उल्बेन संवृतस्तस्मिन्नंत्रैश्च बहिरावृतः ॥ ११ ॥ आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ अकल्पः स्वांगचेष्टायां शकुंत इव पंजरे ॥ १२ ॥ तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् ॥ स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विंदते ॥ १३ ॥ नाथमान ऋषिर्भीतः सप्तवध्रिः कृतांजलिः ॥ स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ १४ ॥ आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ॥ नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ १५ ॥

॥ जीव उवाच ॥ श्रीपतिं जगदाधारमशुभक्षयकारकम् ॥ व्रजामि शरणं विष्णुं शरणागतवत्सलम् ॥ १६ ॥ त्वन्मायामोहितो देहे तथा पुत्रकलत्रके ॥ अहंममाभिमानेन गतोऽहं नाथ संसृतिम् ॥ १७ ॥ कृतं परिजनस्यार्थे मया कर्म शुभाशुभम् ॥ एकाकी तेन दग्धोऽहं गतास्ते फलभागिनः ॥ १८ ॥

याचमानः उपतप्यमानो वा । ऋषिर्देहात्मदर्शी । सप्तवध्रयो बंधनभूता धातवो यस्य सः ॥ १४ ॥ सूतिहेतुभिर्वातैर्वेपितः सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिव ॥ १५ ॥ अत्रातिदुःखितो जीवो मंदविरक्त इव निर्विद्य स्तौति—श्रीपतिमित्याद्यष्टभिः ॥ १६ ॥ १७ ॥ परिजनस्यार्थे कुटुंबपरिपालनाय ॥ १८ ॥ ॥ ॥ ॥

 ॥ १९ ॥ स्वदुःखं विज्ञापयन्नाह—इतो गर्भाद्विवसितुं निर्गंतुमिच्छन् असौ कदा बहिर्निर्यास्यते निष्कास्यते ॥ २० ॥ तत्कृतमुपकारं स्मरन्नाह—येनेति ॥ २१ ॥ २२ ॥ अथवा तस्मादत्रैव स्थितोऽपि विगतक्लमः अव्याकुलः सन् । काऽत्र तव साधनसामग्री, तत्राह—ते पदाश्रयः इति ॥ २३ ॥ दशमास्यः दश मासा गर्भे व्यतीता यस्येति । ऋषिर्जीवः सद्यस्तत्क्षणमेव 

॥ २३ ॥

यदि योन्याः प्रमुच्येऽहं तत्स्मरिष्ये पदं तव ॥ तमुपायं करिष्यामि येन मुक्तिं व्रजाम्यहम् ॥ १९ ॥ विण्मूत्रकूपे पतितो दग्धोऽहं जंठराग्निना ॥ इच्छन्नितो विवसितुं कदा निर्यास्यते बहिः ॥ २० ॥ येनेदृशं मे विज्ञानं दत्तं दीनदयालुना ॥ तमेव शरणं यामि पुनर्मे माऽस्तु संसृतिः ॥ २१ ॥ न च निर्गंतुमिच्छामि बहिर्गर्भात्कदाचन ॥ यत्र यातस्य मे पापकर्मणा दुर्गतिर्भवेत् ॥ २२ ॥ तस्मादत्र महद्दुःखे स्थितोऽपि विगतक्लमः ॥ उद्धरिष्यामि संसारादात्मानं ते पदाश्रयः ॥ २३ ॥ ॥ श्रीभगवानुवाच ॥ एवं कृतमतिर्गर्भे दशमास्यः स्तुवन् ऋषिः ॥ सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २४ ॥ तेनावसृष्टः सहसा कृत्वाऽवाक्शिर आतुरः ॥ विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ २५ ॥ पतितो भुवि विण्मूत्रे विष्ठाभूरिव चेष्टते ॥ रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥ २६ ॥ गर्भे व्याधौ श्मशाने च पुराणे या मतिर्भवेत् ॥ सा यदि स्थिरतां याति को न मुच्येत बंधनात् ॥ २७ ॥ ॥ ॥ ॥ २३ ॥

अवाचीनं अवाङ्मुखं सूतिहेतुर्मारुतः प्रसूत्यै जन्मार्थं क्षिपति नुदति ॥ २४ ॥ अवसृष्टः अधिक्षिप्तः सन् ॥ २५ ॥ २६ ॥ श्मशाने मृतानुगमने । पुराणे तच्छ्रवणे ॥ २७ ॥ ॥ ॥ ॥ ॥

किमिति स्थिरतां न याति इत्यत्राह–यदेति ॥ २८ ॥ २९ ॥ गर्भदुःखमुक्त्वा शैशवदुःखमाह–परेति त्रिभिः । परस्य छंदं मनोगतमभिप्रायम् । अविदुषा जनेन पुष्यमाणः पाल्यमानः । अनभिप्रेतं प्रतिकूलं आपन्नः प्राप्तः सन् स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निंबरसपानं, उदरव्यथया रोदने स्तनपानमित्यादि ॥ ३० ॥ आसनोत्थानचेष्टने च अनीशः सन् रोरूयतीत्य-

यदा गर्भाद्बहिर्याति कर्मभोगादनंतरम् ॥ तदैव वैष्णवी माया मोहयत्येव पूरुषम् ॥ २८ ॥
स तदा मायया स्पृष्टो न किंचिद्वदतेऽवशः ॥ शैशवादिभवं दुःखं पराधीनतयाऽश्नुते ॥ २९ ॥
परच्छंदं न विदुषा पुष्यमाणो जनेन सः ॥ अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ ३० ॥
शायितोऽशुचिपर्यंके जंतुस्वेदजदूषिते ॥ नेशः कंडूयनेंऽगानामासनोत्थानचेष्टने ॥ ३१ ॥
तुदंत्यामत्वचं दंशा मशका मत्कुणादयः ॥ रुदंतं विगतज्ञानं कृमयः कृमिकं यथा ॥ ३२ ॥
इत्येवं शैशवं भुक्त्वा दुःखं पौगंडमेव च ॥ ततो यौवनमासाद्य याति संपदमासुरीम् ॥ ३३ ॥
तदा दुर्व्यसनासक्तो नीचसंगपरायणः ॥ शास्त्रसत्पुरुषाणां च द्वेष्टा स्यात्कामलंपटः ॥ ३४ ॥
दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेंद्रियः ॥ प्रलोभितः पतत्यंधे तमस्यग्नौ पतंगवत् ॥ ३५ ॥

नुषंगः ॥ ३१ ॥ आमा कोमला त्वक् यस्य तं गर्भे जातं ज्ञानम् ॥ ३२ ॥ शैशवं पंचवर्षाणि पौगंडं यौवनादर्वाक् तत्र चाध्ययनादिदुःखानि । यौवनजदुःखमाह–आसुरीं 'दंभो दर्पोऽभिमानश्च' इत्यादिकाम् ॥ ३३ ॥ तदा यौवनसमये ॥ ३४ ॥ कामलंपटतामेवाह–दृष्ट्वेति । देवस्य मम मायारूपां तद्भावैस्तस्याः कटाक्षकपटस्नेहवंचनादिभिर्भावैः प्रलोभितः सन्नंधे तमसि महा-

मोहे पतति ॥ ३५ ॥ अत्र पंचेंद्रियप्रधानो नरः पततीति किं वाच्यम् ? एकैकेंद्रियासक्त्यैव वहवो नष्टा इत्याह-कुरंगेति पंचभिः । शब्दस्पर्शरूपरसगंधैर्मोहिताः कुरंगादयः पंच हता एव । किंच पंचभिः श्रवणादिभिरिंद्रियैः पंच शब्दादिविषयान् यः एक एव प्रमादी अविवेकी सेवते स युवा कथं न हन्यते ? अपि तु हन्यत एवेत्यर्थः ॥ ३६ ॥ हननमेव निरूपयति- अलब्ध इति द्वाभ्याम् । न लब्धं अभीप्सितं वांछितं कामिन्यादिसुखं येन सः । अज्ञानादविचारादिद्धः प्रवृद्धो मन्युः कोपो



कुरंगमातंगपतंगभृंगमीना हताः पँचभिरेव पंच ॥ एकः प्रमादी स कथं न हन्यते यः सेवते पंचभिरेव पंच ॥ ३६ ॥ अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः ॥ सह देहेन मानेन वर्धमानेन मन्युना ॥ ३७ ॥ करोति विग्रहं कामी कामिष्वंताय चात्मनः ॥ बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ ३८ ॥ एवं यो विषयासक्त्या नरत्वमतिदुर्लभम् ॥ वृथा नाशयते मूढस्तस्मात्पापतरो हि कः ॥ ३९ ॥ जातीशतेषु लभते भुवि मानुषत्वं तत्रापि दुर्लभतरं खलु भो द्विजत्वम् ॥ यस्तन्न पालयति लालयतींद्रियाणि तस्यामृतं क्षरति हस्तगतं प्रमादात् ॥ ४० ॥

यस्येति । यदा वांछितलाभो न जातः तदा शुचार्पितः शोकेन युक्तो भवति, यदा देहेन सहैव वर्धमानेन मन्युना च ॥ ३७ ॥ आत्मनोऽहिताय स्वस्य नाशाय कामिषु । अन्यजारेषु कामिनीनिमित्तं विग्रहं विरोधं करोति तदा कामी युवा बलेनाधिकैर्जारैर्हन्येत यथा प्रबलैर्गजैर्हीनो गज इव ॥ ३८ ॥ यो विषयासक्त्या वृथैव नरत्वं नाशयति तमनुशोचन्नाह-एवमिति द्वाभ्याम् ॥ ३९ ॥ जातीशतेष्विति । पश्वादिजातीनां शतेषु । 'शत'शब्दोऽत्र आनंत्यवाचकः, अनेकजीवजातिष्वित्यर्थः । भुवि कर्मभूमौ

च मानुषत्वं यन्मनुष्यशरीरं लभते, तद्दुर्लभं हि भगवन्नामस्मरणार्हत्वात् 'अहो बत श्वपचोतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम्' इति वचनात्। तत्रापि नरदेहेऽपि द्विजत्वं ब्राह्मणत्वं दुर्लभतरं अतिदुर्लभं खलु। अतो भो गरुड! यो द्विजस्तत्र तारुण्ये पालयति। देहमिति शेषः। इंद्रियाणि लालयति विषयास्वादने लंपटानि करोति, तस्य द्विजस्य हस्तगतं अनायासेन करतले प्राप्तं पापेन अजरामरत्वप्रदमप्यमृतं प्रमादात् पालनस्यालस्यात् क्षरति वृथैव निःसरति पतति, तथा तपस्तीर्थादिषु समर्थं मुक्तिपदं तारुण्यं क्षुद्रविषयाभिलाषेण वृथैव भवतीत्यर्थः॥ ४०॥ ततस्तारुण्यानंतरं तां 'आस्तेऽवमत्योपन्यस्तम्' इत्यादिना पूर्वोक्तां

ततस्तां वृद्धतां प्राप्य महाव्याधिसमाकुलः॥ मृत्युं प्राप्य महद्दुःखं नरकं याति पूर्ववत्॥ ४१॥
एवं गतागतैः कर्मपाशैर्बद्धाश्च पापिनः॥ कदापि न विरज्यंते मम मायाविमोहिताः॥ ४२॥
इति ते कथिता तार्क्ष्य! पापिनां नारकी गतिः॥ अंत्येष्टिकर्महीनानां किं भूयः श्रोतुमिच्छसि॥ ४३॥
इति श्रीगरुडपुराणे सारोद्धारे पापिजन्मादिदुःखनिरूपणो नाम षष्ठोऽध्यायः॥ ६॥
॥ सूत उवाच॥ इति श्रुत्वा तु गरुडः कंपितोऽश्वत्थपत्रवत्॥ जनानामुपकारार्थं पुनः पप्रच्छ केशवम्॥ १॥

वृद्धतां प्राप्य पूर्ववत् 'यातनादेह आवृत्त्या' इत्यादिपूर्वोक्तप्रकारेण॥ ४१॥ एवं षडध्यायोक्तप्रकारेण गतागतैः गता नरके आगता भुवि एतद्रूपैः कर्मणा पाशैर्बद्धा न विरज्यंते विरक्तिं न लभंते। अत्र हेतुः—मम मायाविमोहिता इति॥ ४२॥ पापगतिमुपसंहरति—इतीति॥ ४३॥ इति टीकायां षष्ठोऽध्यायः॥ ६॥ ॥ गरुडः षड्भिरध्यायैः श्रुत्वा पातकयातनाम्॥ अथ तन्नाशकोपायमष्टभिः परिपृच्छति॥ १॥ और्ध्वदेहिकदानेन गतः प्रेतोऽपि सद्गतिम्॥ इत्याह सप्तमे विष्णुर्बभ्रुवाहनसत्कथाम्॥

॥ २ ॥ १ ॥ प्रमादात् ॥ २ ॥ ३ ॥ पुराणार्थेषु विशेषेण निश्चयो यस्य तमुपायं वद ॥ ४ ॥ मृतस्य पुण्यपापाभ्यां द्वे गती तत्र पापगतिः सुनिरूपिता । इदानीं पुण्यगतिं श्रीभगवानुवाच–साध्विति यावद्ग्रंथसमाप्ति ॥ ५ ॥ ६ ॥ ७ ॥ किंच अपुत्राणामेव

॥ गरुड उवाच ॥ कृत्वा पापानि मनुजाः प्रमादाद्बुद्धितोऽपि वा ॥ न यांति यातना याम्याः केनोपायेन कथ्यताम् ॥ २ ॥ संसारार्णवमग्नानां नराणां दीनचेतसाम् ॥ पापोपहतबुद्धीनां विषयोपहतात्मनाम् ॥ ३ ॥ उद्धारार्थं वद स्वामिन्! पुराणार्थविनिश्चयम् ॥ उपायं येन मनुजाः सद्गतिं यांति माधव ॥४॥ ॥ श्रीभगवानुवाच ॥ साधु पृष्टं त्वया तार्क्ष्य! मानुषाणां हिताय वै ॥ शृणुष्वावहितो भूत्वा सर्वं ते कथयाम्यहम् ॥ ५ ॥ दुर्गतिः कथिता पूर्वमपुत्राणां च पापिनाम् ॥ पुत्रिणां धार्मिकाणां तु न कदाचित्खगेश्वर! ॥ ६ ॥ पुत्रजन्मविरोधः स्याद्यदि केनापि कर्मणा ॥ तदा कश्चिदुपायेन पुत्रोत्पत्तिं प्रसाधयेत् ॥ ७ ॥ हरिवंशकथां श्रुत्वा शतचंडीविधानतः ॥ भक्त्या श्रीशिवमाराध्य पुत्रमुत्पादयेत्सुधीः ॥ ८ ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ९ ॥ एकोऽपि पुत्रो धर्मात्मा सर्वं तारयते कुलम् ॥ पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी ॥ १० ॥ इति वेदैरपि प्रोक्तं पुत्रमाहात्म्यमुत्तमम् ॥ तस्मात्पुत्रमुखं दृष्ट्वा मुच्यते पैतृकादृणात् ॥ ११ ॥ पौत्रस्य स्पर्शनान्मर्त्यो मुच्यते च ऋणत्रयात् ॥ लोकानन्त्यदिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ॥ १२ ॥ ॥ ॥

दुर्गतिर्भवति नतु पुत्रिणां । अतः पुत्रमहिमानं निरूपयिष्यन्पुत्रोत्पत्त्युपायमेवाह–हरिवंशेति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ लोकान् यम-

लोकादीन् अत्येत् अतिक्रमति । पुत्रादिभिः कृत्वा दिवः स्वर्गस्य प्राप्तिर्भवति ॥ १२ ॥ अत्र विशेषमाह—ब्राह्मोढेति । ब्राह्मविवाहेन ऊढा विवाहिता या पत्नी तस्याः पुत्रो ब्राह्मोढापुत्रः, स तु उत् ऊर्ध्वं स्वर्गादिलोकं नयति । उन्नयतीत्यत्र संधिरार्षः । ब्राह्मस्तु 'सवर्णायाः सवर्णेन वरेण सह जायते । विवाहो वेदविधिना ब्राह्म इत्यभिधीयते' ॥ १ ॥ इति संगृहीतः । अविवाहितायाः

ब्राह्मोढापुत्रोन्नयति संगृहीतस्त्वधो नयेत् ॥ एवं ज्ञात्वा खगश्रेष्ठ हीनजातिसुतांस्त्यजेत् ॥ १३ ॥
सवर्णेभ्यः सवर्णासु ये पुत्रा औरसाः खग ॥ त एव श्राद्धदानेन पितॄणां स्वर्गहेतवः ॥ १४ ॥
श्राद्धेन पुत्रदत्तेन स्वर्यातीति किमुच्यते ॥ प्रेतोऽपि परदत्तेन गतः स्वर्गमथो शृणु ॥ १५ ॥
अत्रैवोदाहरिष्येऽहमितिहासं पुरातनम् ॥ और्ध्वदेहिकदानस्य परं माहात्म्यसूचकम् ॥ १६ ॥
पुरा त्रेतायुगे तार्क्ष्य ! राजासीद्बभ्रुवाहनः ॥ महोदये पुरे रम्ये धर्मनिष्ठो महाबलः ॥ १७ ॥
यज्वा दानपतिः श्रीमान्ब्रह्मण्यः साधुवत्सलः ॥ शीलाचारगुणोपेतो दयादाक्षिण्यसंयुतः ॥ १८ ॥
पालयामास धर्मेण प्रजाः पुत्रानिवौरसान् ॥ क्षत्रधर्मरतो नित्यं स दंड्यान्दंडयन्नृपः ॥ १९ ॥
स कदाचिन्महाबाहुः ससैन्यो मृगयां गतः ॥ वनं विवेश गहनं नानावृक्षसमन्वितम् ॥ २० ॥

पुत्रस्तु अधः अधोगतिं नयति ॥ १३ ॥ सवर्णेभ्यः स्वपतिभ्यः सवर्णासु स्वस्त्रीषु । औरसा इत्यादिना दत्तक्रीतादिव्यावृत्तिः । स्वरित्यव्ययं । स्वर्यातीति किं वाच्यं परदत्तेन श्राद्धेनेत्यनुषंगः ॥ १४ ॥ १५ ॥ अत्र पुत्रमाहात्म्यप्रस्तावेन श्राद्धमहिमानमितिहासमुखेन प्रस्तौति—अत्रेति यावदध्यायसमाप्ति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ॥ ॥

॥ २१ ॥ तेन नृपेण दूरात्प्रक्षिप्तेन अतीव सुदृढेनापि बाणेन विद्ध एव नतु मृतः । एयिवान् गतः ॥ २२ ॥ २३ ॥ क्षुत्तृड्भ्यां क्षामः शुष्कः कंठो यस्य । दूरगमनेन श्रमः स्वेदः आतपेन संतापस्ताभ्यां मूर्च्छितः । अस्वस्थः सरोवरं प्राप्य अश्वेन सहित

नानामृगगणाकीर्णं नानापक्षिनिनादितम् ॥ वनमध्ये तदा राजा मृगं दूरादपश्यत ॥ २१ ॥
तेन विद्धो मृगोऽतीव बाणेन सुदृढेन च ॥ बाणमादाय तं तस्य वनेऽदर्शनमेयिवान् ॥ २२ ॥
कक्षेण रुधिरार्द्रेण स राजानुजगाम तम् ॥ ततो मृगप्रसंगेन वनमन्यद्विवेश सः ॥ २३ ॥
क्षुत्क्षामकंठो नृपतिः श्रमसंतापमूर्च्छितः ॥ जलाशयं समासाद्य साश्व एव व्यगाहत ॥ २४ ॥
पपौ तदुदकं शीतं पद्मगंधादिवासितम् ॥ ततोऽवतीर्य सलिलाद्विश्रमो बभ्रुवाहनः ॥ २५ ॥
ददर्श न्यग्रोधतरुं शीतच्छायं मनोहरम् ॥ महाविटपविस्तीर्णं पक्षिसंघनिनादितम् ॥ २६ ॥
वनस्य तस्य सर्वस्य महाकेतुमिव स्थितम् ॥ मूलं तस्य समासाद्य निषसाद महीपतिः ॥ २७ ॥
अथ प्रेतं ददर्शासौ क्षुत्तृड्भ्यां व्याकुलेंद्रियम् ॥ उत्कचं मलिनं कुब्जं निर्मांसं भीमदर्शनम् ॥ २८ ॥
तं दृष्ट्वा विकृतं घोरं विस्मितो बभ्रुवाहनः ॥ प्रेतोऽपि दृष्ट्वा तं घोरामटवीमागतं नृपम् ॥ २९ ॥
समुत्सुकमना भूत्वा तस्यांतिकमुपागतः ॥ अब्रवीत्स तदा तार्क्ष्य ! प्रेतराजो नृपं वचः ॥ ३० ॥

एव व्यगाहत तस्मिन्प्रविष्टः ॥ २४ ॥ तत अश्वादवतीर्य तदुदकं पपौ । सलिलाज्जलपानाद्विश्रमः विगतश्रमो बभूव ॥ २५ ॥ ॥ २६ ॥ न्यग्रोधतरुं वटवृक्षं महाकेतुं उच्चतरत्वाद्वनध्वजमिव ॥ २७ ॥ २८ ॥ २९ ॥ समुत्सुकमनाः प्रसन्नचित्तः ॥ ३० ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ नानाजनपदाकीर्णं अनेकदेशोद्भवैर्जनैः परिपूर्णं नानारत्नैश्च 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति स्त्रीगजाश्वादिश्रेष्ठवस्तुभिः पूर्णम् ॥ ३५ ॥ 'हर्म्यं राजगृहं प्रोक्तं प्रासादो धनिनां गृहम्' । तेषां शोभाभिराढ्यं

प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि परमां गतिम् ॥ त्वत्संयोगान्महाबाहो! जातो धन्यतरोऽस्म्यहम् ॥ ३१ ॥
॥ राजोवाच ॥ कृष्णवर्ण करालास्य ! प्रेतत्वं घोरदर्शनम् ॥ केन कर्मविपाकेन प्राप्तं ते बहुमंगलम् ॥ ३२ ॥
प्रेतत्वकारणं तात ! ब्रूहि सर्वमशेषतः ॥ कोऽसि त्वं केन दानेन प्रेतत्वं ते विनश्यति ॥ ३३ ॥
॥ प्रेत उवाच ॥ कथयामि नृपश्रेष्ठ ! सर्वमेवादितस्तव ॥ प्रेतत्वकारणं श्रुत्वा दयां कर्तुं त्वमर्हसि ॥ ३४ ॥
वैदशं नाम नगरं सर्वसंपत्समन्वितम् ॥ नानाजनपदाकीर्णं नानारत्नसमाकुलम् ॥ ३५ ॥
हर्म्यप्रासादशोभाढ्यं नानाधर्मसमन्वितम् ॥ तत्राहं न्यवसं तात ! देवार्चनरतः सदा ॥ ३६ ॥
वैश्यो जात्या सुदेवोऽहं नाम्ना विदितमस्तु ते ॥ हव्येन तर्पिता देवाः कव्येन पितरस्तथा ॥ ३७ ॥
विविधैर्दानयोगैश्च विप्राः संतर्पिता मया ॥ दीनांधकृपणेभ्यश्च दत्तमन्नमनेकधा ॥ ३८ ॥
तत्सर्वं निष्फलं राजन् ! मम दैवादुपागतम् ॥ यथा मे निष्फलं जातं सुकृतं तद्वदामि ते ॥ ३९ ॥
मम वै संततिर्नास्ति न सुहृन्न च बांधवः ॥ न च मित्रं हि मे तादृग्यः कुर्यादौर्ध्वदेहिकम् ॥ ४० ॥

युक्तम् । नानाधर्मैः श्रौतस्मार्तैः ॥ ३६ ॥ 'कोऽसि त्वम्' इति प्रश्नोत्तरमाह—वैश्य इति । 'देवार्थमन्नं हव्यं स्यात्पित्रर्थं कव्यमेव च' ॥ ३७ ॥ ३८ ॥ ३९ ॥ ननु सुकृतं कथं निष्फलं जातमहो इत्याशंकायामाह—ममेति ॥ ४० ॥ ॥ ॥

किंच, अपुत्रस्य ममैव प्रेतत्वं जातमिति न; किं तु षोडशश्राद्धरहितस्य सपुत्रस्यापि स्यादित्याह–यस्येति ॥ ४१ ॥ विपदि रक्षकत्वाद्बंधुरिति हेतोः पुत्राद्यभावे राजापि क्रिया कारयेदिति भावः। तदुक्तं विष्णुपुराणे–'उच्छिन्नबंधुज्ञातीनां कारयेदवनीपतिः'। इति ॥ ४२ ॥ पूर्वसुकृतप्रभावान्मणिरत्नलाभः ॥ ४३ ॥ ४४ ॥ सर्वयोनिषु आहारसुखेन दुःखसहिष्णुता भवति मम



यस्य न स्यान्महाराज ! श्राद्धं मासिकषोडशम् ॥ प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ ४१ ॥
त्वमौर्ध्वदेहिकं कृत्वा मामुद्धर महीपते ! ॥ वर्णानां चैव सर्वेषां राजा बन्धुरिहोच्यते ॥ ४२ ॥
तन्मां तारय राजेंद्र ! मणिरत्नं ददामि ते ॥ यथा मे सद्गतिर्भूयात्प्रेतयोनिश्च गच्छति ॥ ४३ ॥
तथा कार्यं त्वया वीर ! मम चेदिच्छसि प्रियम् ॥ क्षुधातृषादिभिर्दुःखैः प्रेतत्वं दुःसहं मम ॥ ४४ ॥
स्वादूदकं फलं चास्ति वनेऽस्मिन् शीतलं शिवम् ॥ न प्राप्नोमि क्षुधार्तोऽहं तृषार्तो न जलं क्वचित् ॥ ४५ ॥
यदि मे हि भवेद्राजन्विधिर्नारायणो महान् ॥ तदग्रे वेदमंत्रैश्च क्रिया सर्वौर्ध्वदेहिकी ॥ ४६ ॥
तदा नश्यति मे नूनं प्रेतत्वं नात्र संशयः ॥ वेदा मंत्रास्तपो दानं दया सर्वत्र जंतुषु ॥ ४७ ॥
सच्छास्त्रश्रवणं विष्णोः पूजा सज्जनसंगतिः ॥ प्रेतयोनिविनाशाय भवंतीति मया श्रुतम् ॥ ४८ ॥ 

तु तदलाभाद्दुःखं दुःसहमेवेत्याह–स्वाद्विति ॥ ४५ ॥ केन दानेन ते प्रेतत्वं विनश्यति इति प्रश्नोत्तरमाह पंचभिः–यदीति ॥ ४६ ॥ ४७ ॥ सच्छास्त्रश्रवणेन धुंधुकारी विमुक्तः सज्जनानां धर्मदत्तादीनां संगाद्बहवः कलहादयो विमुक्ता इति ॥ ४८ ॥

किंच, मम प्रेतत्वं विष्णुपूजयैव यास्यति । अतस्तां वक्ष्यामीत्याह–सुवर्णद्वयमिति । पंचगुंजो माषः । सुवर्णं षोडशमाषसंख्याकं । तस्य द्वयं द्वात्रिंशन्माषकं सुवर्णं कांचनं तस्य प्रतिमां कल्पयेत् ॥ ४९ ॥ विविधैरनेकतीर्थोद्भवैः । अलाभे वापीकूप-

अतो वक्ष्यामि ते विष्णुपूजां प्रेतत्वनाशिनीम् ॥ सुवर्णद्वयमानीय सुवर्णन्यायसंचितम् ॥ तस्य नारायणस्यैकां प्रतिमां भूप ! कल्पयेत् ॥ ४९ ॥ पीतवस्त्रयुगच्छन्नां सर्वाभरणभूषिताम् ॥ स्नापितां विविधैस्तोयैरधिवास्य यजेत्ततः ॥ ५० ॥ पूर्वे तु श्रीधरं तस्या दक्षिणे मधुसूदनम् ॥ पश्चिमे वामनं देवमुत्तरे च गदाधरम् ॥ ५१ ॥ मध्ये पितामहं चैव तथा देवं महेश्वरम् ॥ पूजयेच्च विधानेन गंधपुष्पादिभिः पृथक् ॥५२॥ ततः प्रदक्षिणीकृत्य वह्नौ संतर्प्य देवताः ॥ घृतेन दध्ना क्षीरेण विश्वेदेवांश्च तर्पयेत् ॥ ५३ ॥ ततः स्नातो विनीतात्मा यजमानः समाहितः ॥ नारायणाग्रे विधिवत्स्वां क्रियामौर्ध्वदेहिकीम् ॥५४॥ आरभेत यथाशास्त्रं क्रोधलोभविवर्जितः ॥ कुर्याच्छ्राद्धानि सर्वाणि वृषस्योत्सर्जनं तथा ॥५५॥ ततः पदानि विप्रेभ्यो दद्याच्चैव त्रयोदश ॥ शय्यादानं प्रदत्वा च घटं प्रेतस्य निर्वपेत् ॥५६॥
॥ राजोवाच ॥ कथं प्रेतघटं कुर्याद्दद्यात्केन विधानतः ॥ ब्रूहि सर्वानुकंपार्थं घटं प्रेतविमुक्तिदम् ॥५७॥
॥ प्रेत उवाच ॥ साधु पृष्टं महाराज ! कथयामि निबोध ते ॥ प्रेतत्वं न भवेद्येन दानेन सुदृढेन च ॥५८॥

जलैर्वा अधिवास्य सिंहासने स्थाप्य पूजयेत् ॥ ५० ॥ पूजनप्रकारमाह–पूर्वे इत्यादिपंचभिः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ॥ ५५ ॥ निर्वपेत् घटं दद्यात् ॥ ५६ ॥ ५७ ॥ सुदृढेन त्यक्तुमयोग्येन । अवश्यं कर्तव्येनेत्यर्थः ॥ ५८ ॥ ॥ ॥

॥ ५९ ॥ तदेवाह-संतप्तहाटकमयं शोधितसुवर्णरचितं ब्रह्मादियुतं ब्रह्मादिभिः स्वपूजार्थं स्वस्वस्थाने ह्यधिष्ठितं तेषां खनितनमोंतनामाक्षरैर्युक्तमित्यर्थः। दुग्धघृतपूर्णं च कृत्वा 'अतसीपुष्पसंकाशम्' इति मंत्रेण प्रणम्य विप्राय देहीति ॥ ६० ॥

दानं प्रेतघटं नाम सर्वाशुभविनाशनम् ॥ दुर्लभं सर्वलोकानां दुर्गतिक्षयकारकम् ॥ ५९ ॥ संतप्तहाटकमयं तु घटं विधाय ब्रह्मेशकेशवयुतं सह लोकपालैः ॥ क्षीराज्यपूर्णविवरं प्रणिपत्य भक्त्या विप्राय देहि तव दानशतैः किमन्यैः ॥ ६० ॥ ब्रह्मा मध्ये तथा विष्णुः शंकरः शंकरोऽव्ययः ॥ प्राच्यादिषु च तत्कंठे लोकपालान् क्रमेण तु ॥ ६१ ॥ संपूज्य विधिवद्राजन्! धूपैः कुसुमचंदनैः ॥ ततो दुग्धाज्यसहितं घटं देयं हिरण्मयम् ॥ ६२ ॥ सर्वदानाधिकं चैतन्महापातकनाशनम् ॥ कर्तव्यं श्रद्धया राजन्प्रेतत्वविनिवृत्तये ॥ ६३ ॥ श्रीभगवानुवाच ॥ एवं संजल्पतस्तस्य प्रेतेन सह काश्यप! ॥ सेना जगामानुपदं हस्त्यश्वरथसंकुला ॥ ६४ ॥ ततो बले समायाते दत्वा राज्ञे महामणिम् ॥ नमस्कृत्य पुनः प्रार्थ्य प्रेतोऽदर्शनमेयिवान् ॥ ६५ ॥ तस्माद्वनाद्विनिष्क्रम्य राजापि स्वपुरं ययौ ॥ स्वपुरं च समासाद्य तत्सर्वं प्रेतभाषितम् ॥ ६६ ॥ चकार विधिवत्पक्षिन्नौर्ध्वदेहिकजं विधिम् ॥ तस्य पुण्यप्रदानेन प्रेतो मुक्तो दिवं ययौ ॥ ६७ ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ तस्य भूपतेः पदं पदन्यासं अनुलक्षीकृत्य सेना आजगाम ॥ ६४ ॥ मम कृत्यं न विस्मरणीयमिति तं प्रार्थ्य स प्रेतः अंतर्धानं गतः ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ ॥ ॥ ॥

विधिं कृत्वा प्रेताय ददौ। इतिहासकथनस्याभिप्रायमाह–श्राद्धेनेति ॥ ६८ ॥ ६९ ॥ इति टीकायां सप्तमोऽध्यायः ॥ ७ ॥ कर्मणामुष्मिकेनैव सद्गतिं लभते नरः। तद्विना नेति गरुडस्तदेव परिपृच्छति ॥ १ ॥ अष्टमे नाममाहात्म्यं दानं चातुरकालिकम् ॥ धर्मप्रशंसां प्रोवाच भगवान् धर्मवत्सलः ॥ २ ॥ आमुष्मिकीं परलोकोपयोगिनीं सर्वां आतुरकृत्यादिकां सत्क्रियाम्

श्राद्धेन परदत्तेन गतः प्रेतोऽपि सद्गतिम् ॥ किं पुनः पुत्रदत्तेन पिता यातीति चाद्भुतम् ॥ ६८ ॥
इतिहासमिमं पुण्यं शृणोति श्रावयेच्च यः ॥ न तौ प्रेतत्वमायातः पापाचारयुतावपि ॥ ६९ ॥
इति श्रीगरुडपुराणे सारोद्धारे बभ्रुवाहनेन प्रेतसंस्कारो नाम सप्तमोऽध्यायः ॥७॥ गरुड उवाच ॥
आमुष्मिकीं क्रियां सर्वां वद सुकृतिनां मम ॥ कर्तव्या सा यथा पुत्रैस्तथा च कथय प्रभो! ॥ १ ॥
॥ श्रीभगवानुवाच ॥ साधु पृष्टं त्वया तार्क्ष्य! मानुषाणां हिताय वै ॥ धार्मिकार्हं च यत्कृत्यं तत्सर्वं कथयामि ते ॥ २ ॥ सुकृती वार्द्धके दृष्ट्वा शरीरं व्याधिसंयुतम् ॥ प्रतिकूलान्ग्रहांश्चैव प्राणघोषस्य चाश्रुतिम् ॥३॥ तदा स्वमरणं ज्ञात्वा निर्भयः स्यादतंद्रितः ॥ अज्ञातज्ञातपापानां प्रायश्चित्तं समाचरेत् ॥४॥ यदा स्यादातुरः कालस्तदा स्नानं समारभेत् ॥ पूजनं कारयेद्विष्णोः शालग्रामस्वरूपिणः ॥५॥

॥ १ ॥ प्रश्नमभिनंद्य धार्मिकार्हं सुकृतिजनोचितकृत्यं श्रीभगवानुवाच–सुकृतीत्यादि ॥ २ ॥ अश्रुतिं कर्णे रुद्धे सति अंतःशब्दस्य अश्रवणं च दृष्ट्वा तदेति द्वितीयेन संबंधः ॥ ३ ॥ निर्भयो मृत्युभयशून्यः स्यादपरिहार्यत्वात् अतंद्रितः आतुरकृत्ये निरालस्यः स्याच्चेति ॥ ४ ॥ आतुरकालोंऽतसमयः ॥ ५ ॥ ॥ ॥ ॥ ॥

॥ ६ ॥ ७ ॥ अत्र गुरुर्यथा गुरुमन्यं शास्त्रेण शिष्यायोपदिशति तथैव हरिरपि हरिनाममहिमानं स्वमुखेनाह–संस्मरेदित्यादिविंशत्या ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ननु अजामिलस्तु बहुपापकृत्कथं धाम अगादिति इमामाशंकां परि-



अर्चयेद्गंधपुष्पैश्च कुंकुमैस्तुलसीदलैः ॥ धूपैर्दीपैश्च नैवेद्यैर्बहुभिर्मोदकादिभिः ॥ ६ ॥ दत्वा च दक्षिणां विप्रान्नैवेद्यादेव भोजयेत् ॥ अष्टाक्षरं जपेन्मंत्रं द्वादशाक्षरमेव च ॥ ७ ॥ संस्मरेच्छृणुयाच्चैव विष्णोर्नाम शिवस्य च ॥ हरेर्नाम हरेत्पापं नृणां श्रवणगोचरम् ॥ ८ ॥ रोगिणोऽतिकमासाद्य शोचनीयं न बांधवैः ॥ स्मरणीयं पवित्रं मे नाम ध्येयं मुहुर्मुहुः ॥ ९ ॥ मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ॥ रामो रामश्च कृष्णश्च बुद्धः कल्की तथैव च ॥ १० ॥ एतानि दश नामानि स्मर्तव्यानि सदा बुधैः ॥ समीपे रोगिणो ब्रूयुर्बांधवास्ते प्रकीर्तिताः ॥ ११ ॥ कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते ॥ तस्य भस्मीभवंत्याशु महापातककोटयः ॥ १२ ॥ म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ॥ अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् ॥ १३ ॥ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥ अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ १४ ॥ हरेर्नामश्च या शक्तिः पापनिर्हरणे द्विज ॥ तावत्कर्तुं समर्थो न पातकं पातकी जनः ॥ १५ ॥ किंकरेभ्यो यमः प्राहानयध्वं नास्तिकं जनम् ॥ नैवानयत भो दूताः ! हरिनामस्मरं नरम् ॥ १६ ॥



हरन्नाह–हरिरिति द्वाभ्याम् ॥ १४ ॥ १५ ॥ अत्र नाममाहात्म्यं 'न सांपरायं प्रतिभाति बालं प्रमाद्यंतं धनलोभेन मूढम् । अयं-

लोको नास्ति परश्च नास्तीति पुनःपुनर्वशमापद्यते मे' इति श्रुत्युक्तेन यमदूतसंवादेनाह–किंकरेभ्य इत्यादि ॥ १६ ॥ हरिनामान्येवाह–अच्युतमित्यादि ॥ १७ ॥ ये अच्युतादिनामकदंबं स्मरंति तान् अपापान् पुण्यरूपान्दूरतरेण त्यज, तेषां समीपेऽपि मा गच्छेत्यर्थः ॥ १८ ॥ के तर्हि दंडार्थमानेया इत्यत्राह–तानिति द्वाभ्याम् । असतः दुष्टान् । तानेवाह–मुकुंदपादारविंदयोर्यो मकरंदरूपो रसस्तस्माद्विमुखान् हरिभक्तिरहितानित्यर्थः । कीदृशात् ? निष्किंचनैरजस्रं जुष्टात् । तेषां ज्ञापकमाह–निरयवर्त्मनि

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ॥ श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे ॥१७॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शंखचक्रपाणे ! ॥ भव शरणमितीरयंति ये वै त्यज भट ! दूरतरेण तानपापान् ॥ १८ ॥ तानानयध्वमसतो विमुखान्मुकुंदपादारविंदमकरंदरसादजस्रम् ॥ निष्किंचनैः परमहंसकुलै रसज्ञैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ १९ ॥ जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविंदम् ॥ कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २० ॥ तस्मात्संकीर्तनं विष्णोर्जगन्मंगलमंहसाम् ॥ महतामपि पक्षींद्र ! विद्ध्यैकांतिकनिष्कृतिम् ॥ २१ ॥

स्वधर्मशून्ये गृहे बद्धा तृष्णा यैस्तान् ॥ १९ ॥ किंच यद्येषा जिह्वा इत्याद्यन्वयः । न कृतं विष्णोः कृत्यमाराधनं यैस्तानानयध्वमिति ॥ २० ॥ अतो हरिविमुखानेवानयंत्विति यमो दूतानाज्ञापयति । तस्माज्जगतोऽपि मंगलरूपं महतां बहूनामप्यंहसां पापानां ऐकांतिकनिष्कृतिं परमप्रायश्चित्तरूपं विद्धि ॥ २१ ॥ ॥ ॥ ॥

किंच, चीर्णानि कृतान्यपि तानि हरिविमुखं न पुनंति; किंतु, अभक्ता नरकेष्वेव पतंतीत्यर्थः ॥ २२ ॥ तर्हि के न पतंतीत्यत आह—कृष्णनाम्नैव गतं किल्बिषं पापं येषां ते स्वप्नेऽपि न यमं पश्यंतीत्यन्वयः ॥ २३ ॥ मांसास्थिरक्तानि विद्यंते यस्यां सा मांसास्थिरक्तवती, सा चासौ काया एव वैतरणी च प्रसिद्ध्यापि सा अस्थिवृंदतटा दुर्गमा मांसशोणितकर्दमा भवति, अतः तत्सादृश्यात् कायापि वैतरणी एव। तस्यां यथा यः द्विजेभ्यो गां दद्यात् स न पतेत्तथैवास्यामपि यः अंतसमये नंदनंदन

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ॥ न निष्पुनंति दुर्बुद्धिं सुराकुंभमिवापगाः ॥ २२ ॥
कृष्णनाम्ना न नरकं पश्यंति गतकिल्बिषाः ॥ यमं च तद्भटांश्चैव स्वप्नेऽपि न कदाचन ॥ २३ ॥
मांसास्थिरक्तवत्काये वैतरण्यां पतेन्न सः ॥ योंऽते दद्याद्द्विजेभ्यश्च नंदनंदन गामिति ॥ २४ ॥
अतः स्मरेन्महाविष्णोर्नाम पापौघनाशनम् ॥ गीता सहस्रनामानि पठेद्वा शृणुयादपि ॥ २५ ॥
एकादशीव्रतं गीता गंगांबु तुलसीदलम् ॥ विष्णोः पादांबु नामानि मरणे मुक्तिदानि च ॥ २६ ॥
ततः संकल्पयेदन्नं सघृतं च सकांचनम् ॥ सवत्सा धेनवो देयाः श्रोत्रियाय द्विजातये ॥ २७ ॥

इति गां वाणीं द्विजेभ्यो दंतेभ्यो दद्यात् तवर्गस्य दंतस्थानीयत्वात् सोऽपि कायो वैतरण्यां न पतेत्किंतु मुक्तो भवतीत्यर्थः। तत्र यथा 'एका एकस्य दातव्या बहूनां न कदाचन' इति निषेधात्, तथात्रापि द्विजेभ्यश्चेति चकारः पौनःपुन्यविधानार्थः। अतो नंदनंदन इति वाणीं बहुवारमावर्तयेदित्यत्राविरोधः ॥ २४ ॥ २५ ॥ २६ ॥ एवं नाममाहात्म्यं निरूप्य इदानीं अवश्य-दातव्यातुरदानेन पुत्रं प्रोत्साहयति—तत इत्यादि ॥ २७ ॥ ॥ ॥ ॥ ॥

अनुमोदते यन्मनसि चिंतयति वाचा वदति वा तदप्यक्षयं भवेदिति ॥ २८ ॥ तदर्थं आतुरदानदापनार्थम् ॥ २९ ॥ पूर्वं पित्रैव संचिते अतस्तस्यैव धने ॥ ३० ॥ अतिवाहः परलोकगामी तन्मार्गे यतः आतुरदानात् ॥३१॥३२॥३३॥३४॥ अष्टमहादान-

अंते जनो यद्ददाति स्वल्पं वा यदि वा बहु ॥ तदक्षयं भवेत्ताक्ष्यं ! यत्पुत्रश्चानुमोदते ॥ २८ ॥
अंतकाले तु सत्पुत्रः सर्वदानानि दापयेत् ॥ यत्तदर्थं सुतो लोके प्रार्थ्यते धर्मकोविदैः ॥ २९ ॥
भूमिष्ठं पितरं दृष्ट्वा अर्धोन्मीलितलोचनम् ॥ पुत्रैस्तृष्णा न कर्तव्या तद्धने पूर्वसंचिते ॥ ३० ॥
स तद्ददाति सत्पुत्रो यावज्जीवत्यसौ चिरम् ॥ अतिवाहस्तु तन्मार्गे दुःखं न लभते यतः ॥ ३१ ॥
आतुरे चोपरागे च द्वयं दानं विशिष्यते ॥ अतोऽवश्यं प्रदातव्यमष्टदानं तिलादिकम् ॥ ३२ ॥
तिला लोहं हिरण्यं च कार्पासो लवणं तथा ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ ३३ ॥
एतदष्टमहादानं महापातकनाशनम् ॥ अंतकाले प्रदातव्यं शृणु तस्य च सत्फलम् ॥ ३४ ॥
मम स्वेदसमुद्भूताः पवित्रास्त्रिविधास्तिलाः ॥ असुरा दानवा दैत्यास्तृप्यंति तिलदानतः ॥ ३५ ॥
तिलाः श्वेतास्तथा कृष्णा दानेन कपिलास्तिलाः ॥ संहरंति त्रिधा पापं वाङ्मनःकायसंचितम् ॥ ३६ ॥
लोहदानं च दातव्यं भूमियुक्तेन पाणिना ॥ यमसीमां न चाप्नोति न गच्छेत्तस्य वर्त्मनि ॥ ३७ ॥
कुठारो मुसलो दंडः खड्गश्च छुरिका तथा ॥ शस्त्राणि यमहस्ते च निग्रहे पापकर्मणाम् ॥ ३८ ॥

 फलसहितमाह–ममेति ॥ ३५ ॥ तिलदानात्फलमाह–असुरा इति सार्धेन ॥ ३६ ॥ भूम्यां करं धृत्वेत्यर्थः ॥ ३७ ॥ लोहदान-

फलमाह–यमेति सार्धत्रिभिः ॥ ३८ ॥ ३९ ॥ ४० ॥ स्वर्णदानफलमाह–शृण्विति चतुर्भिः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ लोहादिपंचदानेन तुष्टा भवंतीति शेषः ॥ ४६ ॥ त्रिषु वक्ष्यमाणेषु ॥ ४७ ॥ ४८ ॥ भूमिदानफलमाह–गोचर्म-



यमायुधानां संतुष्टै दानमेतदुदाहृतम् ॥ तस्माद्द्यात्लोहदानं यमलोके सुखावहम् ॥ ३९ ॥
ऊरणः श्यामसूत्रश्च शुंडामर्कोऽप्युदुंबरः ॥ शेषंबलो महादूता लोहदानात्सुखप्रदाः ॥ ४० ॥
शृणु तार्क्ष्य ! परं गुह्यं दानानां दानमुत्तमम् ॥ दत्तेन तेन तुष्यंति भूर्भुवःस्वर्गवासिनः ॥ ४१ ॥
ब्रह्माद्या ऋषयो देवा धर्मराजसभासदाः ॥ स्वर्णदानेन संतुष्टा भवंति वरदायकाः ॥ ४२ ॥
तस्मादेयं स्वर्णदानं प्रेतोद्धरणहेतवे ॥ न याति यमलोकं स स्वर्गतिं तात ! गच्छति ॥ ४३ ॥
चिरं वसेत्सत्यलोके ततो राजा भवेदिह ॥ रूपवान्धार्मिको वाग्मी श्रीमानतुलविक्रमः ॥ ४४ ॥
कार्पासस्य तु दानेन दूतेभ्यो न भयं भवेत् ॥ लवणं दीयते यच्च तेन नैव भयं यमात् ॥ ४५ ॥
अयोलवणकार्पासतिलकांचनदानतः ॥ चित्रगुप्तादयस्तुष्टा यमस्य पुरवासिनः ॥ ४६ ॥
सप्तधान्यप्रदानेन प्रीतो धर्मध्वजो भवेत् ॥ तुष्टा भवंति येऽन्येऽपि त्रिषु द्वारेष्वधिष्ठिताः ॥ ४७ ॥
व्रीहयो यवगोधूमा मुद्गा माषाः प्रियंगवः ॥ चणकाः सप्तमा ज्ञेयाः सप्तधान्यमुदाहृतम् ॥ ४८ ॥ 
गोचर्ममात्रं वसुधा दत्ता पात्रे विधानतः ॥ पुनाति ब्रह्महत्याया दृष्टमेतन्मुनीश्वरैः ॥ ४९ ॥

प्रमाणं यथा–'गोशतं वृषसंयुक्तं यत्रोपविशते भुवि । तद्भूपरिमितं ज्ञेयं गोचर्ममानमुत्तमम्' इति ॥ ४९ ॥ ॥ ॥

॥ ५० ॥ स्वल्पेन भूमिदानेन तु महापापमुपयाति । किंच, सस्यपूर्णायाः प्रदानेन तु इंद्रभुवनं प्रयातीत्याह–पृथिवीमिति ॥ ५१ ॥ ५२ ॥ अदाने दोषमाह–य इति द्वाभ्याम् । कुटीं स्वकीयां पर्णशालामपि नाप्नोति ईदृशो दरिद्री स्यात् ॥ ५३ ॥ तावन्निवसेदिति संबंधः ॥ ५४ ॥ भूमेरपि गोरूपत्वाद्गोदानमेव ॥ ५५ ॥ अंतधेनुः अष्टदानोक्तां रुद्रधेनुं श्रीरुद्रस्य मृत्युंजय-

न व्रतेभ्यो न तीर्थेभ्यो नान्यद्दानाद्विनश्यति ॥ राज्ये कृतं महापापं भूमिदानाद्विलीयते ॥ ५० ॥
पृथिवीं सस्यसंपूर्णां यो ददाति द्विजातये ॥ स प्रयातींद्रभुवने पूज्यमानः सुरासुरैः ॥ ५१ ॥
अत्यल्पफलदानि स्युरन्यदानानि काश्यप ॥ पृथिवीदानजं पुण्यमहन्यहनि वर्धते ॥ ५२ ॥
यो भूत्वा भूमिपो भूमिं नो ददाति द्विजातये ॥ स नाप्नोति कुटीं ग्रामे दरिद्री स्याद्भवे भवे ॥ ५३ ॥
अदानाद्भूमिदानस्य भूपतित्वाभिमानतः ॥ निवसेन्नरके यावच्छेषो धारयते धराम् ॥ ५४ ॥
तस्माद्भूमीश्वरो भूमिदानमेव प्रदापयेत् ॥ अन्येषां भूमिदानार्थं गोदानं कथितं मया ॥ ५५ ॥
ततोऽतधेनुर्दातव्या रुद्रधेनुं प्रदापयेत् ॥ ऋणधेनुं ततो दत्वा मोक्षधेनुं प्रदापयेत् ॥ ५६ ॥
दद्याद्वैतरणीं धेनुं विशेषविधिना खग ! ॥ तारयंति नरं गावस्त्रिविधाच्चैव पातकात् ॥ ५७ ॥
बालत्वे यच्च कौमारे यत्पापं यौवने कृतम् ॥ वयःपरिणतौ यच्च यच्च जन्मांतरेष्वपि ॥ ५८ ॥

त्वान्मृत्युदुःखनिवृत्त्यर्थं ऋणधेनुः ज्ञाताज्ञातऋणविमुक्त्यर्थं मोक्षधेनुः मोक्षार्थम् ॥ ५६ ॥ वैतरणीतरणार्थं पंचमी चेति ॥ ५७ ॥ बालत्वादिषु यत्पापं कृतं तस्मात्तारयंतीति पूर्वेणैव संबंधः ॥ ५८ ॥ ॥ ॥ ॥

॥ ५९ ॥ सकृत् सर्वजन्मनि एकवारमेकामपि ॥ ६० ॥ ६१ ॥ स्वस्थचित्तस्य सावधानस्य तु एकैव गौः आतुरस्य सन्निहित-मरणस्य तु गोशतं अग्रिमक्षणे मरिष्यतीति म्रियमाणस्तस्य तु चित्तविवर्जितं दानानुसंधानरहितं दत्तं गोसहस्रं च ॥ ६२ ॥ मृतस्य मरणानंतरं च गवां लक्षं एतत्सर्वं समं तुल्यफलदं भवति, अतः स्वस्थावस्थायामेव देयमिति भावः। एवमपि एक-

यन्निशायां तथा प्रातर्यन्मध्याह्नापराह्णयोः ॥ संध्ययोर्यत्कृतं पापं कायेन मनसा गिरा ॥ ५९ ॥
दत्वा धेनुं सकृद्वापि कपिलां क्षीरसंयुताम् ॥ सोपस्करां सवत्सां च तपोवृत्तसमन्विते ॥ ६० ॥
ब्राह्मणे वेदविदुषि सर्वपापैः प्रमुच्यते ॥ उद्धरेदंतकालं स दातारं पापसंचयात् ॥ ६१ ॥
एका गौः स्वस्थचित्तस्य ह्यातुरस्य च गोशतम् ॥ सहस्रं म्रियमाणस्य दत्तं चित्तविवर्जितम् ॥ ६२ ॥
मृतस्यैतत्पुनर्लक्षं विधिपूतं च तत्समम् ॥ तीर्थपात्रसमोपेतं दानमेकं च लक्षधा ॥ ६३ ॥
पात्रे दत्तं च यद्दानं तल्लक्षगुणितं भवेत् ॥ दातुः फलमनंतं स्यान्न पात्रस्य प्रतिग्रहः ॥ ६४ ॥
स्वाध्यायहोमसंयुक्तः परपाकविवर्जितः ॥ रत्नपूर्णामपि महीं प्रतिगृह्य न लिप्यते ॥ ६५ ॥
विषशीतापहौ मंत्रवह्नी किं दोषभागिनौ ॥ अपात्रे सा च गौर्दत्ता दातारं नरकं नयेत् ॥ ६६ ॥
कुलैकशतसंयुक्तं ग्रहीतारं तु पातयेत् ॥ नापात्रे विदुषा देया आत्मनः श्रेय इच्छता ॥ ६७ ॥

गोदानमन्यद्वा तीर्थपात्राभ्यां सम्यगुपेतं युक्तं तत् लक्षधा भवतीत्यर्थः ॥ ६३ ॥ ६४ ॥ ६५ ॥ अपात्रे दानेन तु महती विनष्टिरित्याह–अपात्र इति सार्धेन ॥ ६६ ॥ ६७ ॥ ॥ ॥ ॥ ॥

पात्राणामपि बहूनामेका देयेत्याह–एकेति ॥ ६८ ॥ ६९ ॥ 'दद्याद्वैतरणीं धेनुं विशेषविधिना खग' इति पूर्वसूचितविशेषविधिः

एका ह्येकस्य दातव्या बहूनां न कदाचन ॥ सा विक्रीता विभक्ता वा दहत्यासप्तमं कुलम् ॥ ६८ ॥
कथिता या मया पूर्वं तव वैतरणी नदी ॥ तस्या उद्धरणोपायं गोदानं कथयामि ते ॥ ६९ ॥
कृष्णां वा पाटलां वापि धेनुं कुर्यादलंकृताम् ॥ स्वर्णशृंगीं रौप्यखुरां कांस्यपात्रोपदोहिनीम् ॥ ७० ॥
कृष्णवस्त्रयुगच्छन्नां कंठघंटासमन्विताम् ॥ कार्पासोपरि संस्थाप्य ताम्रपात्रं सचैलकम् ॥ ७१ ॥
यमं हैमं न्यसेत्तत्र लोहदंडसमन्वितम् ॥ कांस्यपात्रे घृतं कृत्वा सर्वं तस्योपरि न्यसेत् ॥ ७२ ॥
नावमिक्षुमयीं कृत्वा पट्टसूत्रेण वेष्टयेत् ॥ गर्तं विधाय सजलं कृत्वा तस्मिन्क्षिपेत्तरिम् ॥ ७३ ॥
तस्योपरि स्थितां कृत्वा सूर्यदेहसमुद्भवाम् ॥ धेनुं संकल्पयेत्तत्र यथाशास्त्रविधानतः ॥ ७४ ॥
सालंकाराणि वस्त्राणि ब्राह्मणाय प्रकल्पयेत् ॥ पूजां कुर्याद्विधानेन गंधपुष्पाक्षतादिभिः ॥ ७५ ॥
पुच्छं संगृह्य धेनोस्तु नावमाश्रित्य पादतः ॥ पुरस्कृत्य ततो विप्रमिमं मंत्रमुदीरयेत् ॥ ७६ ॥
भवसागरमग्नानां शोकतापोर्मिदुःखिनाम् ॥ त्राता त्वं हि जगन्नाथः शरणागतवत्सलः ॥ ७७ ॥
विष्णुरूप द्विजश्रेष्ठ ! मामुद्धर महीसुर ! ॥ सदक्षिणा मया दत्ता तुभ्यं वैतरणीं नमः ॥ ७८ ॥
यममार्गे महाघोरे तां नदीं शतयोजनाम् ॥ तर्तुकामो ददाम्येतां तुभ्यं वैतरणीं नमः ॥ ७९ ॥

मेवाह–कृष्णामिति ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ वैतरणीं वितरणं दानं तद्रूपिणीमेनां

धेनुम् ॥ ७९ ॥ प्रतीक्षस्व वैतरण्याः सकाशादुत्तरणार्थं त्वं मा प्रतीक्षस्व दृष्टिं कुरुष्व ॥ ८० ॥ यममार्गभयभीतस्य वाक्यमिदं–गावो म इति ॥ ८१ ॥ भूतानां नरेंद्रादीनां देवेंद्रादिषु प्रतिष्ठिता स्थिता या लक्ष्मीः अस्ति सा एव त्वं धेनुरूपेणासि ।

धेनुके ! मां प्रतीक्षस्व यमद्वारमहापथे ॥ उत्तारणार्थं देवेशि ! वैतरण्यै नमोऽस्तु ते ॥ ८० ॥
गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः ॥ गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ॥ ८१ ॥
या लक्ष्मीः सर्वभूतानां या च देवे प्रतिष्ठिता ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ ८२ ॥
इति मंत्रैश्च संप्रार्थ्य सांजलिर्धेनुकां यमम् ॥ सर्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥ ८३ ॥
एवं दद्याद्विधानेन यो गां वैतरणीं खग ! ॥ स याति धर्ममार्गेण धर्मराजसभांतरे ॥ ८४ ॥
स्वस्थावस्थशरीरे तु वैतरण्यां व्रतं चरेत् ॥ देया च विदुषा धेनुस्तां नदीं तर्तुमिच्छता ॥ ८५ ॥
सा नायाति महामार्गे गोदानेन नदी खग ! ॥ तस्मादवश्यं दातव्यं पुण्यकालेषु सर्वदा ॥ ८६ ॥
गंगादिसर्वतीर्थेषु ब्राह्मणावसथेषु च ॥ चंद्रसूर्योपरागेषु संक्रांतौ दर्शवासरे ॥ ८७ ॥
अयने विषुवे चैव व्यतीपाते युगादिषु ॥ अन्येषु पुण्यकालेषु दद्याद्गोदानमुत्तमम् ॥ ८८ ॥
यदैव जायते श्रद्धा पात्रं संप्राप्यते यदा ॥ स एव पुण्यकालः स्याद्यतः संपत्तिरस्थिरा ॥ ८९ ॥

अतो व्यपोहतु दूरीकरोतु ॥ ८२ ॥ सर्वं उपस्करम् ॥ ८३ ॥ ८४ ॥ व्रतं अवश्यं धेनुं दास्यामीति नियमं कुर्यात् ॥ ८५ ॥ ८६ ॥ आवसथेषु गृहेषु ॥ ८७ ॥ अयने विषुवे मकरकर्कमेषतुलासंक्रांतिदिने । युगादिषु अक्षय्यतृतीयादिषु ॥ ८८ ॥ स एव श्रद्धापात्रयोः

संयोग एव । अतोऽन्यपुण्यकालापेक्षा न कर्तव्येत्यर्थः ॥ ८९ ॥ इदं धेन्वादिदानं स्वहस्तदत्तं सत् स्वर्गसुखप्रदं भवति । अतो वैराग्यमुत्पादयन् स्वहस्तदाने श्रद्धामुत्पादयति–अस्थिराणीत्यादि ॥ ९० ॥ तत्र पात्रे आत्मवित्तानुसारेण । बहुवित्ते सति

अस्थिराणि शरीराणि विभवो नैव शाश्वतः ॥ नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंचयः ॥ ९० ॥
आत्मवित्तानुसारेण तत्र दानमनंतकम् ॥ देयं विप्राय विदुषे स्वात्मनः श्रेय इच्छता ॥ ९१ ॥
अल्पेनापि हि वित्तेन स्वहस्तेनात्मने कृतम् ॥ तदक्षय्यं भवेद्दानं तत्कालं चोपतिष्ठति ॥ ९२ ॥
गृहीतदानपाथेयः सुखं याति महाध्वनि ॥ अन्यथा क्लिश्यते जंतुः पाथेयरहितः पथि ॥ ९३ ॥
यानि यानि च दानानि दत्तानि भुवि मानवैः ॥ यमलोकपथे तानि ह्युपतिष्ठंति चाग्रतः ॥ ९४ ॥
महापुण्यप्रभावेण मानुषं जन्म लभ्यते ॥ यस्तत्प्राप्य चरेद्धर्मं स याति परमां गतिम् ॥ ९५ ॥
अविज्ञाय नरो धर्मं दुःखमायाति याति च ॥ मनुष्यजन्मसाफल्यं केवलं धर्मसेवनम् ॥ ९६ ॥
धनपुत्रकलत्रादि शरीरमपि बांधवाः ॥ अनित्यं सर्वमेवेदं तस्माद्धर्मं समाचरेत् ॥ ९७ ॥
तावद्बंधुः पिता तावद्यावज्जीवति मानवः ॥ मृतानामंतरं ज्ञात्वा क्षणात्स्नेहो निवर्तते ॥ ९८ ॥
आत्मैव ह्यात्मनो बंधुरिति विद्यान्मुहुर्मुहुः ॥ जीवन्नपीति संचिंत्य मृतानां कः प्रदास्यति ॥ ९९ ॥

स्वल्पं न देयमिति भावः ॥ ९१ ॥ ९२ ॥ गृहीतं दानपाथेयं परलोकभोग्यं येन । अन्यथा पाथेयं विना पथि अस्मिँल्लोकमार्गे यथाऽशक्तः क्लिश्यते तथैवामुत्रापि ॥ ९३ ॥ ९४ ॥ ९५ ॥ अविज्ञाय अज्ञात्वा कृत्वेत्यर्थः ॥ ९६ ॥ ९७ ॥ ९८ ॥ जीवन्नप्यात्मैव

बंधुः स्वस्य हितकर्ता जीवतामपि नो दत्तं तर्हि मृतानां कः ? न कोऽपि दास्यतीत्यर्थः । अत एवं जानन्निति द्वितीयेन संबंधः ॥ ९९ ॥ सर्वं इदं आतुरदानम् ॥ १०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ धनं यावत् आत्मायत्तं आत्मनः स्वस्य आयत्तं अधीनं

एवं जानन्निदं सर्वं स्वहस्तेनैव दीयताम् ॥ अनित्यं जीवितं यस्मात्पश्चात्कोऽपि न दास्यति ॥ १०० ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ॥ विमुखा बांधवा यांति धर्मस्तमनुगच्छति ॥ १ ॥
गृहादर्था निवर्तंते श्मशानात्सर्वबांधवाः ॥ शुभाशुभं कृतं कर्म गच्छंतमनुगच्छति ॥ २ ॥
शरीरं वह्निना दग्धं कृतं कर्म सहास्थितम् ॥ पुण्यं वा यदि वा पापं भुंक्ते सर्वत्र मानवः ॥ ३ ॥
न कोऽपि कस्यचिद्बंधुः संसारे दुःखसागरे ॥ आयाति कर्मसंबंधाद्याति कर्मक्षये पुनः ॥ ४ ॥
मातृपितृसुतभ्रातृबंधुदारादिसंगमः ॥ प्रपायामिव जंतूनां नद्यां काष्ठौघवच्चलः ॥ ५ ॥
कस्य पुत्राश्च पौत्राश्च कस्य भार्या धनं च वा ॥ संसारे नास्ति कः कस्य स्वयं तस्मात्प्रदीयताम् ॥ ६ ॥
आत्मायत्तं धनं यावत्तावद्विप्रे समर्पयेत् ॥ पराधीने धने जाते न किंचिद्वक्तुमुत्सहेत् ॥ ७ ॥
पूर्वजन्मकृताद्दानादत्र लब्धं धनं बहु ॥ तस्मादेवं परिज्ञाय धर्मार्थं दीयतां धनम् ॥ ८ ॥
धर्मात्संजायतेऽर्थश्च धर्मात्कामोऽभिजायते ॥ धर्म एवापवर्गाय तस्माद्धर्मं समाचरेत् ॥ ९ ॥ ॥ ३४ ॥

भवति तावद्देयं पराधीने जाते किंचित् मे रा इति वक्तुमपि नोत्सहते । उत्साहेन वक्तुमपि योग्यो न भवति तर्हि दातुं योग्यः कुत इत्यर्थः ॥ ७ ॥ निदर्शनमाह—पूर्वेति । धनं च धर्मैकफलमिति । धर्मार्थमेव दीयताम् ॥ ८ ॥ चतुर्वर्गफलदात् अपि धन-

मेवेत्याह—धर्मादिति ॥ ९ ॥ श्रद्धापूतधर्म एव सद्गतिप्रदो भवतीत्याह—श्रद्धया इति द्वाभ्याम् ॥ ११० ॥ भक्त्योपहृतं समर्पितं तत्पत्रादि प्रयतात्मनः श्रद्धापूतचित्तस्याहमश्नामीति ॥ ११ ॥ स्वहस्तदानं संश्लाघ्य पुत्रदत्तं स्तौति—तस्मादिति ॥ १२ ॥ देवानां समूहो दैवतं तैर्देवसमूहैरपि ॥ १३ ॥ तेनैव वित्तेन पुत्रादिभिः सह स्वयमपि निष्पापो भवतीत्यर्थः ॥ १४ ॥ पितुर्निमित्तमित्यनुवृत्तमेवास्याप्यर्थः 'गर्भधारणपोषाभ्यां पितुर्माता गरीयसी' इति हेतोः सहस्रं । दयाया भगिनी मूर्तिरिति हेतो-

श्रद्धया धार्यते धर्मो बहुभिर्नार्थराशिभिः ॥ निष्किंचना हि मुनयः श्रद्धावंतो दिवं गताः ॥ ११० ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ११ ॥
तस्मादवश्यं दातव्यं तदा दानं विधानतः ॥ अल्पं वा बहु वेतीमां गणनां नैव कारयेत् ॥ १२ ॥
धर्मात्मा च स पुत्रो वै दैवतैरपि पूज्यते ॥ दापयेद्यस्तु दानानि पितरं ह्यातुरं भुवि ॥ १३ ॥
पित्रोर्निमित्तं यद्वित्तं पुत्रैः पात्रे समर्पितम् ॥ आत्मापि पावितस्तेन पुत्रपौत्रप्रपौत्रकैः ॥ १४ ॥
पितुः शतगुणं पुण्यं सहस्रं मातुरेव च ॥ भगिनीदशसाहस्रं सोदरे दत्तमक्षयम् ॥ १५ ॥
नचैवोपद्रवा दातुर्न वा नरकयातनाः ॥ मृत्युकाले नच भयं यमदूतसमुद्भवम् ॥ १६ ॥

र्दशसाहस्रं 'न दयासदृशं दानम्' इति वचनाच्चेति । सोदरस्यापि समानोदरजन्मत्वादात्मतुल्यत्वम् । अतस्तद्दत्तमक्षयं भवति । 'तदक्षयं भवेद्दानं स्वहस्तेनात्मने कृतम्' इति पूर्वोक्तवचनादिति ॥ १५ ॥ दानदातुः पुत्रस्यापि । इह तु उपद्रवा महामार्यादयो न परत्र नचेत्यादि । अत्रापि तेनैव वित्तेनेति पूर्वस्यैवानुवृत्तिः ॥ १६ ॥ ॥ ॥ ॥

अदत्ते दोषमाह—यदीति द्वाभ्याम् ॥ १७ ॥ ११८ ॥ इति टीकायामष्टमोऽध्यायः ॥ ८ ॥ तुलस्यादिकमाहात्म्यं संन्यास-विधिपूर्वकम् । उवाच नवमेऽध्याये म्रियमाणविधिं हरिः ॥ १ ॥ गरुडः पृच्छति—अग्रिमक्षणे मरिष्यतीति म्रियमाणस्तस्य



यदि लोभान्न यच्छंति काले ह्यातुरसंज्ञके ॥ मृताः शोचंति ते सर्वे कदर्याः पापिनः खग ! ॥ १७ ॥
पुत्राः पौत्राः सह भ्रात्रा सगोत्राः सुहृदस्तु ये ॥ ददाति नातुरे दानं ब्रह्मघ्नास्ते न संशयः ॥ ११७ ॥
इति श्रीगरुडपुराणे सारोद्धारे आतुरदाननिरूपणनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ गरुड उवाच ॥
कथितं भवता सम्यग्दानमातुरकालिकम् ॥ म्रियमाणस्य यत्कृत्यं तदिदानीं वद प्रभो ! ॥ १ ॥
श्रीभगवानुवाच ॥ शृणु तार्क्ष्य ! प्रवक्ष्यामि देहत्यागस्य तद्विधिम् ॥ मृता येन विधानेन सद्गतिं यांति
मानवाः ॥२॥ कर्मयोगाद्यदा देही मुंचत्यत्र निजं वपुः ॥ तुलसीसन्निधौ कुर्यान्मंडलं गोमयेन तु ॥ ३ ॥
तिलांश्चैव विकीर्याथ दर्भांश्चैव विनिक्षिपेत् ॥ स्थापयेदासने शुभ्रे शालग्रामशिलां तदा ॥ ४ ॥
शालग्रामशिला यत्र पापदोषभयापहा ॥ तत्सन्निधानमरणान्मुक्तिर्जंतोः सुनिश्चिता ॥ ५ ॥
तुलसीविटपच्छाया यत्रास्ति भवतापहा ॥ तत्रैव मरणान्मुक्तिः सर्वदा दानदुर्लभा ॥ ६ ॥
तुलसीविटपस्थानं गृहे यस्यावतिष्ठते ॥ तद्गृहं तीर्थरूपं हि न यांति यमकिंकराः ॥ ७ ॥ ॥



यत्कृतं तद्वद ॥ १ ॥ येन मृतः सद्गतिं याति तं विधिं शृणु ॥ २ ॥ कर्मयोगात् प्रारब्धकर्मोदयात् देही जीवः निजं आत्मत्वेन स्वीकृतं वपुः । अत्र यदा त्यजति तदा मंडलं कुर्यादित्यन्वयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ॥

॥ ८ ॥ ९ ॥ ननु 'अपुत्रस्य गतिर्नास्ति' इति पूर्वोक्तिविरोधात् पुत्रहीनः कथं विष्णुपुरं याति ? स तु दुर्गतिमेव यातीति च तत्राह– एते तिलादयो दुर्गतिं यांतं निवारयंति ॥ १० ॥ ननु तिलादीनां ईदृशो महिमा कुत इति चेत्तत्राह–ममेति ॥ ११ ॥ दर्भा इति। 'कुशोऽस्मि तृणजातीनां', 'रोमाण्युद्भिज्जजातीनामुत्पत्तिस्थानानि' इति भगवद्वचनादिति ॥१२॥ कुशस्यातिपावनतामाह–

तुलसीमंजरीयुक्तो यस्तु प्राणान्विमुंचति ॥ यमस्तं नेक्षितुं शक्तो युक्तं पापशतैरपि ॥ ८ ॥
तस्या दलं मुखे कृत्वा तिलदर्भासने मृतः ॥ नरो विष्णुपुरं याति पुत्रहीनोऽप्यसंशयः ॥ ९ ॥
तिलाः पवित्रास्त्रिविधा दर्भाश्च तुलसीरपि ॥ नरं निवारयंत्येते दुर्गतिं यांतमातुरम् ॥१०॥
मम स्वेदसमुद्भूता यतस्ते पावनास्तिलाः ॥ असुरा दानवा दैत्या विद्रवंति तिलैस्ततः ॥११॥
दर्भा विभूतिर्मे तार्क्ष्य ! मम रोमसमुद्भवाः ॥ अतस्तत्स्पर्शनादेव स्वर्गं गच्छंति मानवाः ॥१२॥
कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ॥ कुशाग्रे शंकरो देवस्त्रयो देवाः कुशे स्थिताः ॥१३॥
अतः कुशा वह्निमंत्रतुलसीविप्रधेनवः ॥ नैते निर्माल्यतां यांति क्रियमाणाः पुनः पुनः ॥१४॥
दर्भाः पिंडेषु निर्माल्या ब्राह्मणाः प्रेतभोजने ॥ मंत्रा गौस्तुलसी नीचे चितायां च हुताशनः ॥१५॥
गोमयेनोपलिप्ते तु दर्भास्तरणसंस्कृते ॥ भूतले ह्यातुरं कुर्यादंतरिक्षं विवर्जयेत् ॥ १६ ॥ ॥

कुशेति ॥ १३ ॥ क्रियमाणाः कर्मणि प्रयुज्यमाना अपि निर्माल्यतां अयोग्यतां न यांति ॥ १४ ॥ सामान्यशास्त्राद्विशेषशास्त्रस्य बलवत्तामाह–दर्भा इति। नीचे नीचजातिमुखे मंत्राः गौस्तुलसी च तद्गेहे निर्माल्या अग्राह्याः ॥१५॥ प्रासंगिकं परिसमाप्य

प्रकृतमनुसरति–गोमयेनेति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ सुरार्चनं देवपूजाम् ॥ २० ॥ २१ ॥ २२ ॥ ॥ २३ ॥ २४ ॥ २५ ॥



ब्रह्मा विष्णुश्च रुद्रश्च सर्वे देवा हुताशनः ॥ मंडलोपरि तिष्ठंति तस्मात्कुर्वीत मंडलम् ॥ १७ ॥
सर्वत्र वसुधा पूता लेपो यत्र न विद्यते ॥ यत्र लेपः कृतस्तत्र पुनर्लेपेन शुध्यति ॥ १८ ॥
राक्षसाश्च पिशाचाश्च भूताः प्रेता यमानुगाः ॥ अलिप्तदेशे खट्वायामंतरिक्षे विशंति च ॥ १९ ॥
अतोऽग्निहोत्रं श्राद्धं च ब्रह्मभोज्यं सुरार्चनम् ॥ मंडलेन विना भूम्यामातुरं नैव कारयेत् ॥ २० ॥
लिप्तभूम्यामतः कृत्वा स्वर्णं रत्नं मुखे क्षिपेत् ॥ विष्णोः पादोदकं दद्याच्छालग्रामस्वरूपिणः ॥ २१ ॥
शालग्रामशिलातोयं यः पिबेद्बिंदुमात्रकम् ॥ स सर्वपापनिर्मुक्तो वैकुंठभुवनं व्रजेत् ॥ २२ ॥
ततो गंगाजलं दद्यान्महापातकनाशनम् ॥ सर्वतीर्थकृतस्नानदानपुण्यफलप्रदम् ॥ २३ ॥
चांद्रायणं चरेद्यस्तु सहस्रं कायशोधनम् ॥ पिबेद्यश्चैव गंगांभः समौ स्यातामुभावपि ॥ २४ ॥
अग्निं प्राप्य यथा तार्क्ष्य! तूलराशिर्विनश्यति ॥ तथा गंगांबुपानेन पातकं भस्मसाद्भवेत् ॥ २५ ॥
यस्तु सूर्यांशुसंतप्तं गांगं यः सलिलं पिबेत् ॥ स सर्वयोनिनिर्मुक्तः प्रयाति सदनं हरेः ॥ २६ ॥
नद्यो जलावगाहेन पावयंतीतरा जनान् ॥ दर्शनात्स्पर्शनात्पानात्तथा गंगेति कीर्तनात् ॥ २७ ॥
पुनात्यपुण्यान्पुरुषान् शतशोऽथ सहस्रशः ॥ गंगा तस्मात्पिबेत्तस्या जलं संसारतारकम् ॥ २८ ॥

॥ २६ ॥ इतरा अन्या नद्यः । अवगाहेन स्नानेन । गंगा तु दर्शनादिभिरेव पुनातीति द्वितीयेनान्वयः ॥ २७ ॥ २८ ॥

॥ ३६ ॥

जलपानमहिमा तु किं वर्ण्यते ? तत्स्मरणचिंतनादपि मुक्तो भवतीत्याह—गंगा गंगेति द्वाभ्याम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अनशनं जलान्नपरित्यागः । अनशने हे काश्यप ! याऽक्षया गतिरिति हेतोः कुर्यादिति । अथातुरसंन्यासं निर्धारयति—दद्यादिति सार्धेन । अत्र यद्यपि 'ब्राह्मणाः प्रव्रजंति' इति श्रुतेः 'मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते' इति स्मृतिनिषेधाद्ब्राह्मणस्यैव प्रव्रज्या, न तु क्षत्रियादेरित्याहुः; तथापि 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्'

गंगा गंगेति यो ब्रूयात्प्राणैः कंठगतैरपि ॥ मृतो विष्णुपुरं याति न पुनर्जायते भुवि ॥ २९ ॥
उत्क्रामद्भिश्च यः प्राणैः पुरुषः श्रद्धयान्वितः ॥ चिंतयेन्मनसा गंगां सोऽपि याति परां गतिम् ॥ ३० ॥
अतो ध्यायेन्नमेद्गंगां संस्मरेत्तज्जलं पिबेत् ॥ ततो भागवतं किंचिच्छृणुयान्मोक्षदायकम् ॥ ३१ ॥
श्लोकं श्लोकार्धपादं वा योऽन्ते भागवतं पठेत् ॥ न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ ३२ ॥
वेदोपनिषदां पाठाच्छिवविष्णुस्तवादपि ॥ ब्राह्मणक्षत्रियविशां मरणं मुक्तिदायकम् ॥ ३३ ॥
प्राणप्रयाणसमये कुर्यादनशनं खग ! ॥ दद्यादातुरसंन्यासं विरक्तस्य द्विजन्मनः ॥ ३४ ॥

इत्यादिश्रुतेस्त्रैवर्णिकसाधारणत्वात् 'त्रयाणां वर्णानां वेदमधीत्याश्रमाचरणम्' इति सूत्रकारवचनाच्च 'मुखजानामयं धर्मो वैष्णवं लिंगधारणम् । बाहुजातोरुजातानां त्रिदंडं न विधीयते' इति दंडविषये निषेधदर्शनाच्च सोपवीतयोर्वेदमधीतयोर्विरक्तयोः क्षत्रियवैश्ययोरपि दंडधारणमंतरेण केवलं प्रैषमंत्रोच्चारणमात्र एवातुरसंन्यासाधिकारः, नत्वनुपनीतयोर्गृहारूढमूढयोरित्याहुः । किंच, 'द्विजन्मन' इत्युक्तवता श्रीभगवताप्ययमेव पक्षः स्वीकृतः । क्षत्रियवैश्ययोरपि द्विजन्मत्वादातुरसंन्यासाधिकारः सूचित

इति प्रतीमः। तथापि विरक्तस्यैव किमर्थं यदि संन्यासोत्तरं प्रारब्धवशाज्जीवतोऽपि पुनर्भोगभुक्त्या वाताशित्वं स्यात्किंतु गृहात्प्रव्रजेदेवेति। यदुक्तं मनुना–'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्। ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद्गृहात्' इति स्मरणाच्चेति। अत्रायं विशेषः–ब्राह्मणस्तु दंडधारणं कृत्वा क्षत्रियो वैश्यश्च उपशमादिसंन्यासधर्मान् स्वीकृत्य प्रव्रजेदिति अलं प्रासंगिकेन ॥ ३४ ॥ एतदेव सूचयति–संन्यस्तमिति। ॐभूः संन्यस्तं मया, ॐभुवः संन्यस्तं मया, ॐस्वः संन्यस्तं मया, ॐभूर्भुवःस्वः संन्यस्तं मया स्वाहा गायत्री, ॐपुत्रेषणाया वित्तेषणाया लोकेषणायाश्च व्युत्थितोऽहं स्वाहा शिरश्च ॐअभयं

संन्यस्तमिति यो ब्रूयात्प्राणैः कंठगतैरपि ॥ मृतो विष्णुपुरं याति न पुनर्जायते भुवि ॥ ३५ ॥
एवं जातविधानस्य धार्मिकस्य तदा खग ! ॥ ऊर्ध्वच्छिद्रेण गच्छंति प्राणास्तस्य सुखेन हि ॥ ३६ ॥
मुखं च चक्षुषी नासे कर्णौ द्वाराणि सप्त च ॥ एभ्यः सुकृतिनो यांति योगिनस्तालुरंध्रतः ॥ ३७ ॥
अपानान्मिलितप्राणौ यदा हि भवतः पृथक् ॥ सूक्ष्मीभूत्वा तदा वायुर्विनिष्क्रामति पुत्तलात् ॥ ३८ ॥

सर्वभूतेभ्यो मत्तः स्वाहा इत्यादिप्रैषमंत्रानुच्चार्य अहं ब्रह्मास्मीत्यनुभववाक्यार्थविचारणेन ब्रह्मपरो भूयादित्यातुरविधिः। अत्र दंडधारणे तु दाहः तिलोदकपिंडदानादिकं च न स्यात्तस्य बहिः संन्यस्तस्य तुरीयाश्रमत्वात्। अस्याहंब्रह्मास्मीत्यंतः। संन्यस्तस्य तु पारलौकिकमपि सर्वं वक्ष्यमाणं कर्म कुर्यादिति विशेषः। किंच सांप्रदायिकानां तु इदमप्यनभिमतमेव। ते तु ब्राह्मणस्यापि दंडधारणं विनातुरसंन्यासो नास्ति, क्षत्रियवैश्ययोश्च सर्वथैवानधिकार इत्येवं वदंतीति ॥ ३५ ॥ एवं उक्तप्रकारेण जातं विधानं आतुरकृत्यं यस्य तस्य ॥ ३६ ॥ ऊर्ध्वच्छिद्राण्येवाह–मुखमिति ॥ ३७ ॥ प्राणोत्क्रमणेन शरीरत्यागप्रकारमाह–

अपानादिति । नाभिस्थाने मिलितयोः प्राणापानयोर्यदा विश्लेषो भवति तदा सूक्ष्मीभूत्वाऽतींद्रियः सन् वायुः प्राणः पुत्तलात् शरीरान्निःसरति ॥ ३८ ॥ मरुतीश्वरे शरीराधारभूते प्राणे निर्गते सति निराधारो द्रुम इव शरीरं पतति ॥ ३९ ॥ गतप्राणस्य शरीरस्यावस्थामाह–निर्विचेष्टमिति द्वाभ्याम् ॥ ४० ॥ ईदृशे देहे ॥ ४१ ॥ पृथिव्यादीनां स्वस्वरूपे लयमाह सपादेन ॥ ४२ ॥

शरीरं पतते पश्चान्निर्गते मरुतीश्वरे ॥ कालाहतं पतत्येवं निराधारो यथा द्रुमः ॥ ३९ ॥
निर्विचेष्टं शरीरं तु प्राणैर्मुक्तं जुगुप्सितम् ॥ अस्पृश्यं जायते सद्यो दुर्गंधं सर्वनिंदितम् ॥ ४० ॥
त्रिधावस्था शरीरस्य कृमिविड्भस्मरूपतः ॥ किं गर्वः क्रियते देहे क्षणविध्वंसिभिर्नरैः ॥ ४१ ॥
पृथिव्यां लीयते पृथ्वी आपश्चैव तथाऽप्सु च ॥ तेजस्तेजसि लीयेत समीरस्तु समीरणे ॥ ४२ ॥
आकाशश्च तथाकाशे सर्वव्यापी च शंकरः ॥ नित्यमुक्तो जगत्साक्षी आत्मा देहेष्वजोऽमरः ॥ ४३ ॥
सर्वेंद्रिययुतो जीवः शब्दादिविषयैर्वृतः ॥ कामरागादिभिर्युक्तः कर्मकोशसमन्वितः ॥ ४४ ॥
पुण्यवासनया युक्तो निर्मिते स्वेन कर्मणा ॥ स प्रविश्य नवे देहे गृहे दग्धे यथा गृही ॥ ४५ ॥
तदा विमानमादाय किंकिणीजालमालि यत् ॥ आयांति देवदूताश्च लसच्चामरशोभिताः ॥ ४६ ॥

आत्मा तु जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीत्येवं भाष्यकारादिभिरुक्तषड्भावविकाररहित एवास्ति ॥ ४३ ॥ ननु पृथिव्यादयस्तु स्वस्वसूक्ष्मस्वरूपे लीना भवंति, आत्मा च नित्यमुक्तो जगत्साक्षी भवति, तर्हि कर्मफलभोक्ता क इत्याशंकायां जीव एव पुण्यापुण्यवासनानुसारेण शुभाशुभकर्मफलभोक्ताऽस्तीति व्यावहारिकं जीवस्वरूपं निरूपयन्नाह–सर्व इति ॥४४॥

 

॥ ४५ ॥ ४६ ॥ धार्मिका वल्लभा येषां ते देवदूताः । कृतं आतुरकृत्यं येन तं एनं धार्मिकं स्वः स्वर्गलोके नयंति ॥ ४७ ॥ ॥ ४७ ॥ सुष्ठु शोभनो दिव्यस्तेजोमयो देहो यस्य स देवरूपः सन्नाकं स्वर्गादिलोकं तत्क्षणमेव प्राप्नोतीति । नहि सुकृतिनां वर्षपर्यंतं यममार्गगमनं भवतीति भावः ॥ ४८ ॥ इति टीकायां नवमोऽध्यायः ॥ ९ ॥ ॥ स्वर्ग गतस्य जीवस्य देहदाहविधिं

धर्मतत्त्वविदः प्राज्ञाः सदा धार्मिकवल्लभाः ॥ तदैनं कृतकृत्यं स्वर्विमानेन नयंति ते ॥ ४७ ॥ सुदिव्यदेहो विरजांबरस्रक्सुवर्णरत्नाभरणैरुपेतः ॥ दानप्रभावात्स महानुभावः प्राप्नोति नाकं सुरपूज्यमानः ॥ ४८ ॥ इति श्रीगरुडपुराणे सारोद्धारे म्रियमाणकृत्यनिरूपणो नाम नवमोऽध्यायः ॥ ९ ॥ गरुड उवाच ॥ देहदाहविधानं च वद सुकृतिनां विभो ! ॥ सती यदि भवेत्पत्नी तस्याश्च महिमां वद ॥ १ ॥ श्रीभगवानुवाच ॥ शृणु तार्क्ष्य ! प्रवक्ष्यामि सर्वमेवौर्ध्वदेहिकम् ॥ यत्कृत्वा पुत्रपौत्राश्च मुच्यंते पैतृकादृणात् ॥ २ ॥ किं दत्तैर्बहुभिर्दानैः पित्रोरंत्येष्टिमाचरेत् ॥ तेनाग्निष्टोमसदृशं पुत्रः फलमवाप्नुयात् ॥ ३ ॥ तदा शोकं परित्यज्य कारयेन्मुंडनं सुतः ॥ समस्तबांधवैर्युक्ताः सर्वपापापनुत्तये ॥ ४ ॥ मातापित्रोर्मृतौ येन कारितं मुंडनं नहि ॥ आत्मजः स कथं ज्ञेयः संसारार्णवतारकः ॥ ५ ॥

खगः ॥ सत्या विधानमाहात्म्यं हरिं च परिपृच्छति ॥ १ ॥ दाहतृतीयदिनयोः पंचकस्य विधिं तथा ॥ सतीगंगाप्रभावं च दशमे प्राह माधवः ॥ २ ॥ देहेति ॥ १ ॥ और्ध्वदेहिकं लोकांतरोपयोगि कर्म ॥ २ ॥ अंत्येष्टिं दाहादिकर्म ॥ ३ ॥ पापानां अपनुत्तिर्नाशस्तदर्थमिति हेतुरुक्तः ॥ ४ ॥ मृतौ मातापित्रोः मरणे सति इत्यर्थः ॥ ५ ॥ ॥ ॥ ॥

॥ ६ ॥ स्रग्भिः पुष्पमालादिभिर्मंडयेच्छवं भूषयेत् । तदुक्तं विष्णुपुराणे—'प्रेतदेहं शुभैः स्नानैः स्नापितं स्रग्विभूषितम् । दग्ध्वा ग्रामाद्बहिः स्नायात्' इति ॥ ७ ॥ संकल्पेन अमुकगोत्राय अमुकनाम्ने शवाय ब्रह्मदैवत्यस्थानपिंडोऽयं तवोपतिष्ठतामिति मया दीयतेऽयम् ॥ ८ ॥ एवं हि द्वारि विश्रामे पांथो भूतनाम्ना विष्णुरुद्रदैवत्यं पिंडं दद्यादिति । तेन स्थानपिंडेन तस्य

अतो मुंडनमावश्यं नखकक्षविवर्जितम् ॥ ततः सबांधवः स्नात्वा धौतवस्त्राणि धारयेत् ॥ ६ ॥
सद्यो जलं समानीय ततस्तं स्नापयेच्छवम् ॥ मंडयेचंदनैः स्रग्भिर्गंगामृत्तिकयाऽथवा ॥ ७ ॥
नवीनवस्त्रैः संच्छाद्य तदा पिंडं सदक्षिणम् ॥ नामगोत्रे समुच्चार्य संकल्पेनापसव्यतः ॥ ८ ॥
मृत्युस्थाने शवो नाम तस्य नाम्ना प्रदापयेत् ॥ तेन भूमिर्भवेत्तुष्टा तदधिष्ठातृदेवता ॥ ९ ॥
द्वारदेशे भवेत्पांथस्तस्य नाम्ना प्रदापयेत् ॥ तेन नैवोपघाताय भूतकोटिषु दुर्गताः ॥ १० ॥
ततः प्रदक्षिणां कृत्वा पूजनीयः स्नुषादिभिः ॥ स्कंधः पुत्रेण दातव्यस्तदाऽन्यैर्बांधवैः सह ॥ ११ ॥
धृत्वा स्कंधे स्वपितरं यः श्मशानाय गच्छति ॥ सोऽश्वमेधफलं पुत्रो लभते च पदे पदे ॥ १२ ॥
नीत्वा स्कंधे स्वपृष्ठेऽके सदा तातेन लालितः ॥ तदैव तदृणान्मुच्येन्मृतं स्वपितरं वहेत् ॥ १३ ॥

शवस्य अधिष्ठातृदेवता आधारभूता भूमिस्तुष्टा भवेदिति कारणमुक्तम् ॥ ९ ॥ तेन द्वारपिंडेन भूतकोटिषु भूतानां गणनासु ये दुर्गताः दुष्टं अशुचिस्थानं प्राप्तास्ते उपघाताय विघ्नाय न । विघ्नोऽत्र सद्गतिमवरुध्य स्वसमानं कारणं तत्कर्तुं नैष प्रभवतीति भावः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ॥ ॥ ॥ ॥

तेन भूतनाम्ना तस्मै प्रेताय पिंड इत्यनुवर्तते । संमार्ज्य भूमिं अभ्युक्ष्य जलेन संस्नाप्य शवम् ॥ १४ ॥ तस्य प्रेतस्य होतव्यस्य होतुं दग्धुं योग्यस्य देहस्य अयोग्यत्वकारकान् । अत्र पिंडदानं विना तन्मांसभक्षणयोग्यत्वं । यथोच्छिष्टं हविर्न हवनाय योग्यं भवति तद्वद्देहोऽपीत्यर्थः । अतः पिशाचादयः पिंडं भुक्त्वा तन्मांसभक्षणं न कुर्वंतीति कारणमुक्तं, इदमेव चितादौ ॥ १५ ॥ १६ ॥ संमार्ज्य भूमिं संलिप्य गोमयेन वेदिकालिप्तभूमिं उल्लिख्य तस्यां दर्भेणोर्ध्वरेखां कृत्वा रेखां

ततोऽर्धमार्गे विश्रामं संमार्ज्याभ्युक्ष्य कारयेत् ॥ संस्नाप्य भूतसंज्ञाय तस्मै तेन प्रदापयेत् ॥ १४ ॥
पिशाचा राक्षसा यक्षा ये चान्ये दिक्षु संस्थिताः ॥ तस्य होतव्यदेहस्य नैवायोग्यत्वकारकाः ॥ १५ ॥
ततो नीत्वा श्मशानेषु स्थापयेदुत्तरासुखम् ॥ तत्र देहस्य दाहार्थं स्थलं संशोधयेद्यथा ॥ १६ ॥
संमार्ज्य भूमिं संलिप्योल्लिख्योद्धृत्य च वेदिकाम् ॥ अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः ॥ १७ ॥
पुष्पाक्षतैरथाभ्यर्च्य देवं क्रव्यादसंज्ञकम् ॥ लोमभ्यस्त्वनुवाकेन होमं कुर्याद्यथाविधि ॥ १८ ॥
त्वं भूतभृज्जगद्योनिस्त्वं भूतपरिपालकः ॥ मृतः सांसारिकस्तस्मादेनं त्वं स्वर्गतिं नय ॥ १९ ॥ ॥

मध्येऽनामिकांगुष्ठेनोद्धृत्य जलेनाभ्युक्ष्य उपसमाधाय तत्र वह्निं संस्थाप्य क्रव्यं मृतकस्य मांसं अत्ति भक्षतीति क्रव्यादस्तदेव संज्ञा नाम यस्य तं देवं वह्निं पुष्पादिभिः संपूज्य 'लोमभ्यः स्वाहा, त्वग्भ्यः स्वाहा, मांसेभ्यः स्वाहा' इत्याद्यनुवाकेन वेदमंत्रेण विधिमनतिक्रम्येति यथाविधि होमं कुर्यात् ॥ १७ ॥ १८ ॥ हे क्रव्याद देव ! त्वमेवांते भूतानि पंचभूतात्मकशरीराणि बिभर्षि स्वस्मिन्धारयसि इति भूतभृदसि । किंच, त्वमेव जगतां योनिः कारणं चासि । पंचमहाभूतांतर्गतत्वात्त्वमेव लोकस्य

सर्वप्राणिजातस्य क्षुधासंदीपनेन भुक्तान्नपरिपाकेन परिपालकोऽसि । तस्माद्धेतोः सांसारिकः संसारे भवः मृतश्चायं पुरुषस्तमेनं स्वर्गतिं नय प्रापयेति प्रार्थना ॥ १९ ॥ चितायां मोक्षः स्थापनं तत्प्रभृतिकं तदारभ्य सपिंडनात्प्राक् प्रेतत्वं भवति, अतश्चितायां शवहस्ते च सपिंडीपर्यंतं च प्रेतनाम्नैव प्रदातव्यं स्थानादिषु शवपांथभूतनामभिरिति ॥ २० ॥ २१ ॥ पक्षांतरमाह–केऽपीति । प्रेतकल्पं अंत्येष्टिविधानं तद्विदः साधकमप्याहुः, अतस्तेन साधकनाम्ना वा करे एव प्रेतनाम्नेति ॥ २२ ॥ यथा दिक्पालादि-

इति संप्रार्थयित्वाग्निं चितां तत्रैव कारयेत् ॥ श्रीखंडतुलसीकाष्ठैः पलाशाश्वत्थदारुभिः ॥ २० ॥
चितामारोप्य तं प्रेतं पिंडौ द्वौ तत्र दापयेत् ॥ चितायां शवहस्ते च प्रेतनाम्ना खगेश्वर ! ॥ चितामोक्ष-
प्रभृतिकं प्रेतत्वमुपजायते ॥ २१ ॥ केऽपि तं साधकं प्राहुः प्रेतकल्पविदो जनाः ॥ चितायां तेन नाम्ना वा
प्रेतनाम्नाथवा करे ॥ २२ ॥ इत्येवं पंचभिः पिंडैः शवस्याहुतियोग्यता ॥ अन्यथा चोपघाताय पूर्वोक्तास्ते
भवंति हि ॥ २३ ॥ प्रेतो दत्वा पंच पिंडान् हुतमादाय तं तृणैः ॥ अग्निं पुत्रस्तदा दद्यान्न भवेत्पंचकं
यदि ॥ २४ ॥ पंचकेषु मृतो यस्तु न गतिं लभते नरः ॥ दाहस्तत्र न कर्तव्यः कृतेऽन्यमरणं भवेत् ॥ २५ ॥

बलिभिर्हविराहुतियोग्यं भवति तद्वत्पंचपिंडैः शवस्याहुतियोग्यतेति । अन्यथा पंचपिंडदानं विना तूपघाताय स्वकुलनाशाय पूर्वोक्तभूतपिशाचादयो भवंतीति ॥ २३ ॥ पूर्वं लोमभ्यः स्वाहेत्यनुवाकेन हुतं तमेवाग्निं तृणैरादाय पुत्रो दद्यादग्निं निरग्निकानां । साग्निकानां तु अग्निहोत्रादादाय दद्यादिति विशेषः ॥ २४ ॥ यदि पंचकं स्यात्तदा दाहो न । 'वासवोत्तरदला-दिपंचके प्रेतदाहतृणकाष्ठसंग्रहं न कारयेत्' इति निषेधात् ॥ २५ ॥ ॥ ॥ ॥

रेवती अंते यस्य तदेतत्पंचकं दाहे अर्हं योग्यं न ॥ २६ ॥ दाहे सति शुभाभाव एवाह–गृहे इति ॥ २७ ॥ विधिना तु पंचकेऽपि दाहः स्यादित्याह–अथेति ॥ २८ ॥ विधिमेवाह–शवेति । मंत्राः संहितायां ज्ञातव्याः ॥ २९ ॥ 'प्रेता जयता नर



आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपंचकम् ॥ रेवत्यंतं न दाहेऽर्हं दाहे च न शुभं भवेत् ॥ २६ ॥
गृहे हानिर्भवेत्तस्य ऋक्षेष्वेषु मृतो हि यः ॥ पुत्राणां गोत्रिणां चापि कश्चिद्विघ्नः प्रजायते ॥ २७ ॥
अथवा ऋक्षमध्ये हि दाहः स्याद्विधिपूर्वकः ॥ तद्विधिं ते प्रवक्ष्यामि सर्वदोषप्रशांतये ॥ २८ ॥
शवस्य निकटे तार्क्ष्य ! निक्षिपेत्पुत्तलांस्तदा ॥ दर्भमयांश्च चतुर ऋक्षमंत्राभिमंत्रितान् ॥ २९ ॥
तप्तहेम प्रकर्तव्यं वहंति ऋक्षनामभिः ॥ प्रेताजयतमंत्रेण पुनर्होमस्तु संपुटैः ॥ ३० ॥
ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह ॥ सपिंडनदिने कुर्यात्तस्य शांतिविधिं सुतः ॥ ३१ ॥
तिलपात्रं हिरण्यं च रूप्यं रत्नं यथाक्रमम् ॥ घृतपूर्णं कांस्यपात्रं दद्याद्दोषप्रशांतये ॥ ३२ ॥
एवं शांतिविधानं तु कृत्वा दाहं करोति यः ॥ न तस्य विघ्नो जायेत प्रेता यांति परां गतिम् ॥ ३३ ॥
एवं पंचकदाहः स्यात्तद्विना केवलं दहेत् ॥ सती यदि भवेत्पत्नी तया सह विनिर्दहेत् ॥ ३४ ॥
पतिव्रता यदा नारी भर्तुः प्रियहिते रता ॥ इच्छेत्सहैव गमनं तदा स्नानं समाचरेत् ॥ ३५ ॥



इंद्रो वः शर्म यच्छतु' इति मंत्रेण संपुटैः ऋक्षनामभिः होमः कार्यः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ प्रसंगात्सतीकृत्यं तन्महिमानं चाह पतिव्रतेत्याद्येकोनविंशतिभिः ॥ ३५ ॥ ॥ ॥ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ अपीडनमेव दृष्टांतेन स्पष्टयति–दह्यत इति द्वाभ्याम् ॥ ४३ ॥ दिव्यादौ विवादे शपथादौ ॥ ४४ ॥ किंच अंतरात्मा सतीजीवः मृतेन देहरूपेण तु मरणं गतेन आत्मना अव्ययात्मरूपेण च भर्त्रा

कुंकुमांजनसद्वस्त्रभूषणैर्भूषितां तनुम् ॥ दानं दद्याद्द्विजातिभ्यो बंधुवर्गेभ्य एव च ॥ ३६ ॥
गुरुं नमस्कृत्य तदा निर्गच्छेन्मंदिराद्बहिः ॥ ततो देवालयं गत्वा भक्त्या तं प्रणमेद्धरिम् ॥ ३७ ॥
समर्प्याभरणं तत्र श्रीफलं परिगृह्य च ॥ लज्जां मोहं परित्यज्य श्मशानभवनं व्रजेत् ॥ ३८ ॥
तत्र सूर्यं नमस्कृत्य परिक्रम्य चितां तदा ॥ पुष्पशय्यां तदारोहेन्निजांके स्वापयेत्पतिम् ॥ ३९ ॥
सखिभ्यः श्रीफलं दद्याद्दाहमाज्ञापयेत्ततः ॥ गंगास्नानसमं ज्ञात्वा शरीरं परिदाहयेत् ॥ ४० ॥
न दहेद्गर्भिणी नारी शरीरं पतिना सह ॥ जनयित्वा प्रसूतिं च बालं पोष्य सती भवेत् ॥ ४१ ॥
नारी भर्तारमासाद्य शरीरं दहते यदि ॥ अग्निर्दहति गात्राणि नैवात्मानं प्रपीडयेत् ॥ ४२ ॥
दह्यते ध्मायमानानां धातूनां च यथा मलः ॥ तथा नारी दहेत्पापं हुताशे ह्यमृतोपमे ॥ ४३ ॥
दिव्यादौ सत्ययुक्तश्च शुद्धो धर्मयुतो नरः ॥ यथा न दह्यते तप्तलोहपिंडेन कर्हिचित् ॥ ४४ ॥
तथा सा पतिसंयुक्ता दह्यते न कदाचन ॥ अंतरात्मात्मना भर्त्रा मृतेनैकत्वमागता ॥ ४५ ॥
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् ॥ तावन्न मुच्यते सा हि स्त्रीशरीरात्कथंचन ॥ ४६ ॥

सह एकतां प्राप्ता पुनर्नारीशरीरं न प्राप्नोतीत्यर्थः ॥ ४५ ॥ इममेवार्थं व्यतिरेकमुखेन द्रढयति–यावदिति । यावत्सती न

स्यात्तावत्स्त्रीत्वान्न मुच्यते किंतु सती एव मुच्यते इत्यर्थः ॥ ४६ ॥ भर्तरि मृते जीवति च सति तद्गता तदनुगता भवेत् ॥ ४७ ॥ महीयते पूज्या भवति ॥ ४८ ॥ भर्तृपरमा भर्तुरपि शोभनरूपा ॥ ४९ ॥ अत्र अस्मिंल्लोके ॥ ५० ॥ तिस्रः कोट्य इति अगणितानि 'यावत्यः सिकता भूमेस्तावतीरददं स्म गाः' इतिवत् ॥ ५१ ॥ रमणेन सहैकत्वं गतापि तेन क्रीडते इत्यत्र 'अद्वैते च स्मितं स्फीतं न स्यादन्योन्यमीक्षणम्' इति वचनादद्वैतानंदादपि स्नेहानंदे अधिकसुखानुभवात्पृथक् भूत्वा रमत इति

तस्मात्सर्वप्रयत्नेन स्वपतिं सेवयेत्सदा ॥ कर्मणा मनसा वाचा मृते जीवति तद्गता ॥ ४७ ॥
मृते भर्तरि या नारी समारोहेद्धुताशनम् ॥ सारुंधतीसमा भूत्वा स्वर्गलोके महीयते ॥ ४८ ॥
तत्र सा भर्तृपरमा स्तूयमानाप्सरोगणैः ॥ रमते पतिना सार्धं यावदिंद्राश्चतुर्दश ॥ ४९ ॥
मातृकं पैतृकं चैव यत्र सा च प्रदीयते ॥ कुलत्रयं पुनात्यत्र भर्तारं यानुगच्छति ॥ ५० ॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ॥ तावत्कालं वसेत्स्वर्गे पतिना सह मोदते ॥ ५१ ॥
विमाने सूर्यसंकाशे क्रीडते रमणेन सा ॥ यावदादित्यचंद्रौ च भर्तृलोके चिरं वसेत् ॥ ५२ ॥
पुनश्चिराय सा भूत्वा जायते विमले कुले ॥ पतिव्रता तु या नारी तमेव लभते पतिम् ॥ ५३ ॥

भावः भर्तृलोके स्वर्गे ॥ ५२ ॥ किंच, मुक्ता अपि लीलाविग्रहं कृत्वा भजंतेऽत्र भजनानंदस्याधिक्यं तथात्रापि स्नेहानंदस्याधिकत्वात् रमणाय स्वेच्छयैव विमले कुले जायते न तु कर्मणा इति अन्यथा सती एव स्त्रीशरीरान्मुच्यते नान्या इति पूर्वोक्तवचनविरोधः स्यात् । तं स्वपतिमेव लभते । तदुक्तं माघे—'सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवांतरेष्वपि' 

इति ॥ ५३ ॥ अनुतप्याह—या इति ॥ ५४ ॥ प्रासंगिकं पंचकसतीकृत्यं परिसमाप्य प्रस्तुतदाहमेवानुसरति—यदीति । तं नरं एवं वक्ष्यमाणप्रकारेण ॥ ५५ ॥ स्फोटयेत् । अत्रायमभिप्रायः—हठयोगिनस्तु स्वेच्छया ब्रह्मरंध्रं भित्त्वा ब्रह्मलोकं यांति । कर्मयोगिनां तु परतो भेदनेन पितृदेवलोकप्राप्तिर्भवति । संन्यासिनां तु पूर्वं भित्त्वा पश्चात् गंगायां तदलाभे भूमौ वा निक्षिपेदिति ॥ ५६ ॥ ५७ ॥ मंत्रमेवाह—अस्मात् अकारात् । 'अकारो वासुदेवः स्यात्' इति मंत्रकोशः । 'अक्षराणामकारोऽस्मि' इति

या क्षणं दाहदुःखेन सुखमेतादृशं त्यजेत् ॥ सा मूढा जन्मपर्यंतं दह्यते विरहाग्निना ॥ ५४ ॥
तस्मात्पतिं शिवं ज्ञात्वा सह तेन दहेत्तनुम् ॥ यदि न स्यात्सती तार्क्ष्य ! तमेवं प्रदहेत्तदा ॥ ५५ ॥
अर्धे दग्धेऽथवा पूर्णे स्फोटयेत्तस्य मस्तकम् ॥ गृहस्थानां तु काष्ठेन यतीनां श्रीफलेन च ॥ ५६ ॥
प्राप्तये पितृलोकानां भित्त्वा तद्ब्रह्मरंध्रकम् ॥ आज्याहुतिं ततो दद्यान्मंत्रेणानेन तत्सुतः ॥ ५७ ॥
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ॥ असौ स्वर्गाय लोकाय स्वाहा ज्वलतु पावकः ॥ ५८ ॥
एवमाज्याहुतिं दत्वा तिलमिश्रां समंत्रकाम् ॥ रोदितव्यं ततो गाढं तेन तस्य सुखं भवेत् ॥ ५९ ॥

श्रीभगवद्वचनाच्च । हे पावक ! त्वं श्रीवासुदेवाज्जातोऽसि । 'वाचां वह्नेर्मुखं क्षेत्रम्' इति स्मृत्युक्तेः । किंच, त्वत् त्वत्तः सकाशात् अयं जनः स्वर्गाय लोकाय स्वर्गलोकं प्रति गंतुं पुनर्जायते, तेजोमयदिव्यशरीरेण उत्पन्नो भवति । किंच, असौ अस्य स्थूलदेहः स्वाहा त्वयि हविरस्तु । किंच ज्वालायामेव हविर्हूयते । अतस्त्वं ज्वलतु प्रज्वलितो भवेति मंत्रार्थः ॥ ५८ ॥ एवमिति । अर्धदग्धे तु मस्तकं स्फोटयेत् । पूर्णदग्धे सति आज्याहुतिं दद्याच्चेति । तेन रोदनेन । गुर्जराणां कुलव्यवहारपरमेतत् ॥ ५९ ॥

पूर्वं स्त्रीभिः ततः स्त्रीभ्यः पश्चात्सुतादिभिरिति नामगोत्राभ्यां उपकल्पितं संकल्पितम् अमुकगोत्राय अमुकप्रेतायेदं तिलोदकं मद्दत्तं तवोपतिष्ठतामिति ॥ ६० ॥ प्राशयेत् चर्वयेत् । शोकदिने मिष्टपरिहाराय पूर्वं कटुमुखं कुर्यादित्यभिप्रायः । गुणान् कीर्तिकरान्, 'यावत्कीर्तिर्मनुष्यस्य पुण्यलोकेषु गीयते । तावत्कालं वसेत्स्वर्गे पूज्यमानः सुरासुरैः' इत्यभिप्रायः ॥ ६१ ॥

दाहादनंतरं कार्यं स्त्रीभिः स्नानं ततः सुतैः ॥ तिलोदकं ततो दद्यान्नामगोत्रोपकल्पितम् ॥ ६० ॥
प्राशयेन्निंबपत्राणि मृतकस्य गुणान्वदेत् ॥ स्त्रीजनोऽग्रे गृहं गच्छेत्पृष्ठतो नरसंचयः ॥ ६१ ॥
गृहे स्नानं पुनः कृत्वा गोग्रासं च प्रदापयेत् ॥ पत्रावल्यां च भुंजीयाद्गृहान्नं नैव भक्षयेत् ॥ ६२ ॥
मृतकस्थानमालिप्य दक्षिणाभिमुखं ततः ॥ द्वादशाहकपर्यंतं दीपं कुर्यादहर्निशम् ॥ ६३ ॥
सूर्येऽस्तमागते तार्क्ष्य ! श्मशाने वा चतुष्पथे ॥ दुग्धं च मृन्मये पात्रे तोयं दद्याद्दिनत्रयम् ॥ ६४ ॥
अपक्वमृण्मयं पात्रं क्षीरनीरप्रपूरितम् ॥ काष्ठत्रयं गुणैर्बद्धं धृत्वा मंत्रं पठेदिमम् ॥ ६५ ॥
श्मशानानलदग्धोऽसि परित्यक्तोऽसि बांधवैः ॥ इदं नीरमिदं क्षीरमत्र स्नाहि मितं पिब ॥ ६६ ॥
चतुर्थे संचयः कार्यः साग्निकैश्च निरग्निकैः ॥ तृतीयेऽह्नि द्वितीये वा कर्तव्यश्चाविरोधतः ॥ ६७ ॥

॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ इदं नीरं अत्र स्नाहि । अत्रास्मिन्पात्रे सितं स्वल्पं इदं क्षीरं च पिब भुंक्ष्व ॥ ६६ ॥ चतुर्थे दिने । तदुक्तं विष्णुपुराणे–'चतुर्थेऽह्नि च कर्तव्यं भस्मास्थिचयनं नृप' इति । अविरोधतः चतुर्थदिने पंचकशनिवारादियोगात् ॥ ६७ ॥ ॥ ॥ ॥ ॥

संचयनविधानमेवाह–गत्वेत्याद्येकादशभिः ॥ ६८ ॥ परिक्रमा वामावर्तेन कुर्यात् ॥ ६९ ॥ अभ्युक्ष्य पूर्वं तु किंचिद्दुग्धेन संप्रोक्ष्य उद्धरेत् चितास्थानान्निष्कासयेत् ॥ ७० ॥ उपलेपितस्थलमेव स्थंडिलं भवति, तत्त्रिकोणं कृत्वा तत्र त्रिषु दक्षिणपश्चिमोत्तरासु

गत्वा श्मशानभूमिं च स्नानं कृत्वा शुचिर्भवेत् ॥ ऊर्णासूत्रं वेष्टयित्वा पवित्रीं परिधाय च ॥ ६८ ॥
दद्यात् श्मशानवासिभ्यस्ततो माषबलिं सुतः ॥ यमाय त्वेति मंत्रेण तिस्रः कुर्यात्परिक्रमाः ॥ ६९ ॥
ततो दुग्धेन चाभ्युक्ष्य चितास्थानं खगेश्वर ! ॥ जलेन सेचयेत्पश्चादुद्धरेदस्थिवृंदकम् ॥ ७० ॥
कृत्वा पलाशपत्रेषु क्षालयेद्दुग्धवारिभिः ॥ संस्थाप्य मृण्मये पात्रे श्राद्धं कुर्याद्यथाविधि ॥ ७१ ॥
त्रिकोणं स्थंडिलं कृत्वा गोमयेनोपलेपितम् ॥ दक्षिणाभिमुखो दिक्षु दद्यात्पिंडत्रयं त्रिषु ॥ ७२ ॥
पुंजीकृत्य चिताभस्म तत्र धृत्वा त्रिपादुकाम् ॥ स्थापयेत्तत्र सजलमनाच्छाद्य मुखं घटम् ॥ ७३ ॥
ततस्तंडुलपाकेन दधिघृतसमन्वितम् ॥ बलिं प्रेताय सजलं दद्यान्मिष्टं यथाविधि ॥ ७४ ॥
पदानि दश पंचैव चोत्तरस्यां दिशि व्रजेत् ॥ गर्तं विधाय तत्रास्थिपात्रं संस्थापयेत्खग ! ॥ ७५ ॥
तस्योपरि ततो दद्यात्पिंडं दाहार्तिनाशनम् ॥ गर्तादुद्धृत्य तत्पात्रं नीत्वा गच्छेज्जलाशयम् ॥ ७६ ॥
तत्र प्रक्षालयेद्दुग्धजलादस्थि पुनःपुनः ॥ चर्चयेच्चंदनेनाथ कुंकुमेन विशेषतः ॥ ७७ ॥
धृत्वा संपुटके तानि कृत्वा च हृदि मस्तके ॥ परिक्रम्य नमस्कृत्य गंगामध्ये विनिक्षिपेत् ॥ ७८ ॥

दिक्षु ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ गर्ते पिंडाद्दाहस्यार्तिर्नश्यति, मलिनषोडशस्यांगभूतो भवति ॥ ७६ ॥ ७७ ॥ ७८ ॥

गंगायां अस्थिपतनस्य महिमानमाह—अंतरित्यष्टभिः ॥ ७९ ॥ दशदिनमध्ये एव महीयते पूज्यो भवति ॥ ८० ॥ तस्यामस्थिपतनप्रभावं तु किं वर्ण्यते । तज्जलकृतसंगपवनस्पर्शादपि कृतार्थो भवतीत्याह—गंगेति ॥ ८१ ॥ गंगाजलस्य असाधारणतामाह ॥ ८२ ॥ यश एवाह—या इति । एतान्षष्टिसहस्रान्भस्माख्यानपि भस्म एवाख्या नामानि येषां भस्मावशेषानित्यर्थः

अंतर्दशाहं यस्यास्थि गंगातोये निमज्जति ॥ न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ ७९ ॥
यावदस्थि मनुष्यस्य गंगातोयेषु तिष्ठति ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ८० ॥
गंगाजलोर्मिं संस्पृश्य मृतकं पवनो यदा ॥ स्पृशते पातकं तस्य सद्य एव विनश्यति ॥ ८१ ॥
आराध्य तपसोग्रेण गंगां देवीं भगीरथः ॥ उद्धारार्थं पूर्वजानामानयद्ब्रह्मलोकतः ॥ ८२ ॥
त्रिषु लोकेषु विख्यातं गंगायाः पावनं यशः ॥ या पुत्रान्सगरस्यैतान् भस्माख्याननयद्दिवम् ॥ ८३ ॥
पूर्वे वयसि पापानि ये कृत्वा मानवा मृताः ॥ गंगायामस्थिपतनात्स्वर्गलोकं प्रयांति ते ॥ ८४ ॥
कश्चिद्व्याधो महारण्ये सर्वप्राणिविहिंसकः ॥ सिंहेन निहतो यावत्प्रयाति नरकालये ॥ ८५ ॥
तावत्कालेन तस्यास्थि गंगायां पातितं तदा ॥ दिव्यं विमानमारुह्य स गतो देवमंदिरम् ॥ ८६ ॥
अतः स्वमेव सत्पुत्रो गंगायामस्थि पातयेत् ॥ अस्थिसंचयनादूर्ध्वं दशगात्रं समाचरेत् ॥ ८७ ॥ 

॥ ८३ ॥ पतनात्पतनमात्रादेव ॥ ८४ ॥ अत्र इतिहासं कथयति—कश्चिदिति द्वाभ्याम् ॥ ८५ ॥ अयं भावः—अजामिलो यथा अविदितहरिनाममहिमापि सुतगतहरिनामोच्चारणान्मुक्तः तथैवायमपि तच्चरणोदकादिति ॥ ८६ ॥ अतः गंगैव मुक्तिप्रदा

इति हेतोः ॥ ८७ ॥ अथशब्दो विधानांतरे । अत्र पुनर्दाहिकं सिंहावलोकनन्यायेनाह–यत् यस्मिन्दिने श्रृणुयात् तदा तस्मिन्नेव दिने पूर्ववत्पूर्वोक्तविधानेन पुत्तलं केवलमेव दहेन्नतु काष्ठैः। समादाय सम्यगस्थिसंचयनविधानेनादाय क्वचित्पिष्टस्य सांगं हस्तमात्रं पुत्तलं विधाय तन्नाभौ प्रज्वलितदीपं निधाय प्राणप्रतिष्ठां कुर्यात् । यथा–'अमुकगोत्रस्य प्राणा इह प्राणाः हंसो जीव इह स्थितो जीवः सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहागत्य सुखं चिरं तिष्ठंतु

अथ कश्चिद्विदेशे वा वने चौरभये मृतः ॥ न लब्धस्तस्य देहश्चेच्छृणुयाद्यद्दिने तदा ॥ ८८ ॥
दर्भपुत्तलकं कृत्वा पूर्ववत्केवलं दहेत् ॥ तस्य भस्म समादाय गंगातोये विनिक्षिपेत् ॥ ८९ ॥
दशगात्रादिकं कर्म तद्दिनादेव कारयेत् ॥ स एव दिवसो ग्राह्यः श्राद्धे सांवत्सरादिके ॥ ९० ॥
पूर्णे गर्भे मृता नारी विदार्य जठरं तदा ॥ बालं निष्कास्य निक्षिप्य भूमौ तामेव दाहयेत् ॥ ९१ ॥
गंगातीरे मृतं बालं गंगायामेव पातयेत् ॥ अन्यदेशे क्षिपेद्भूमौ सप्तविंशतिमासजम् ॥ ९२ ॥
अतः परं दहेत्तस्य गंगायामस्थि निक्षिपेत् ॥ जलकुंभश्च दातव्यं बालानामेव भोजनम् ॥ ९३ ॥

स्वाहा'इति लेलिहानमुद्रया तद्धृदये विन्यसेत् । ततो यावद्दीपः प्रज्वलति तावत्पूर्ववद्विष्णुस्मरणं कुर्यात् । आतुरदानं च दद्यात् । ततो दीपनिर्वाणे सति तं काष्ठैः पूर्ववद्दहेदिति ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ प्रसंगात् बालादीनां कृत्यमाह–गंगेति ॥ ९२ ॥ अतः परं सप्तविंशतिमासात्परम् ॥ ९३ ॥ ॥ ॥ ॥

गर्भे एव नष्टे मृते सति क्रिया दुग्धदानादिकं नास्ति, तस्य किंचिदपि न दातव्यमित्यर्थः । 'शिशुरादंतजननात्' इति स्मृतेर्दंतोत्पत्तिपर्यंतं शिशुरिति संज्ञा । 'बालः स्याद्यावदाशिखम्' । आशिखं चूडाकर्मतृतीयवर्षपर्यंतं बाल इति संज्ञेत्यर्थः । विपत्तिषु मरणेषु घटादिकं देयम्; 'बाले वा तरुणे वृद्धे घटो भवति चाक्षयः' इति वचनात् ॥ ९४ ॥ 'आपंचवर्षात्कौमारः

गर्भे नष्टे क्रिया नास्ति दुग्धं देयं मृते शिशौ ॥ घटं च पायसं भोज्यं दद्याद्बालविपत्तिषु ॥ ९४ ॥
कुमारे च मृते बालान्कुमारानेव भोजयेत् ॥ सबालान्भोजयेद्विप्रान्पौगंडे सव्रतेऽव्रते ॥ ९५ ॥
मृतश्च पंचमादूर्ध्वमव्रतः सव्रतोऽपि वा ॥ पायसेन गुडेनापि पिंडान्दद्याद्दश क्रमात् ॥ ९६ ॥
एकादशं द्वादशं च वृषोत्सर्गविधिं विना ॥ महादानविहीनं च पौगंडे कृत्यमाचरेत् ॥ ९७ ॥
जीवमाने च पितरि न पौगंडे सपिंडनम् ॥ अतस्तस्य द्वादशाहन्येकोद्दिष्टं समाचरेत् ॥ ९८ ॥
स्त्रीशूद्राणां विवाहस्तु व्रतस्थाने प्रकीर्तितः ॥ व्रतात्प्राक् सर्ववर्णानां वयस्तुल्या क्रिया भवेत् ॥ ९९ ॥
स्वल्पात्कर्मप्रसंगाच्च स्वल्पाद्विषयबंधनात् ॥ स्वल्पे वयसि देहे च क्रियां स्वल्पामपीच्छति ॥ १०० ॥
किशोरे तरुणे कुर्याच्छय्यावृषमखादिकम् ॥ पददानं महादानं गोदानमपि दापयेत् ॥ १ ॥ ॥

पौगंडो दशहायनः' । अव्रते बालान् सव्रते विप्रान् ॥ ९५ ॥ पंचमाद्वर्षादूर्ध्वं पौगंडावस्थायामव्रतः उपवीतसंस्काररहितः सव्रतः सोपवीतः ॥ ९६ ॥ महादानं शय्यादिकम् ॥ ९७ ॥ एकस्य तस्यैवोद्देशेन कृतं एकोद्दिष्टम् ॥ ९८ ॥ व्रतस्थाने व्रतबंधस्थाने उपवीतसंस्कारस्य अनधिकारात् देहे चापि स्वल्पे सति क्रियामपि स्वल्पां कुर्यात् ॥ ९९ ॥ १०० ॥ किशोरे तरुणावस्थायां

तु मृते सति सर्वमेव कृत्यं करणीयमित्याह–किशोर इति । 'किशोरः षोडशसमास्ततो यौवनमादिशेत्' ॥ १ ॥ संन्यासिनां तु दाहादिकं किमपि कृत्यं न करणीयमित्याह–यतीनामिति । सर्वेषां हंसादिचतुर्विधानां तेषां स्वपितृणामपि गृहस्थैरपि सुतादिभिर्दाहादिकं न कर्तव्यं । 'कुटीचकं तु प्रदहेत्' इति प्राचीनैर्यदुक्तं तदयुक्तमित्याक्षिपन्नाह–न दाहमिति । यैः प्रैषमंत्रोच्चारणपूर्वकं संन्यस्तं तेषां दाहादिकं सर्वशास्त्रेष्वविहितमेव ॥ २ ॥ ननु दशगात्रं विना प्रेतत्वं स्यादिति चेन्मैवम्; दंडग्रहणमात्रेणेति ज्ञानशून्यानामपि संन्यासिनां प्रेतत्वं नैवेति ॥ ३ ॥ किंच ज्ञानयुक्तेन संन्यासेन तु जीवन्मुक्तविदेहत्वमेव भवतीत्याह–ज्ञानीति

यतीनां चैव सर्वेषां न दाहो नोदकक्रिया ॥ दशगात्रादिकं तेषां न कर्तव्यं सुतादिभिः ॥ २ ॥
दंडग्रहणमात्रेण नरो नारायणो भवेत् ॥ त्रिदंडग्रहणात्तेषां प्रेतत्वं नैव जायते ॥ ३ ॥
ज्ञानिनस्तु सदा मुक्ताः स्वरूपानुभवेन हि ॥ अतस्ते तु प्रदत्तानां पिंडानां नैव कांक्षिणः ॥ ४ ॥
तस्मात्पिंडादिकं तेषां नतु नोदकमाचरेत् ॥ तीर्थश्राद्धं गयाश्राद्धं पितृभक्त्या समाचरेत् ॥ ५ ॥
हंसं परमहंसं च कुटीचकबहूदकौ ॥ एतान्संन्यासिनस्तार्क्ष्य ! पृथिव्यां स्थापयेन्न तान् ॥ ६ ॥

॥ ४ ॥ अवश्यकर्तव्यतया तु नाचरेत् । किंतु पितृभक्त्यैव ॥ ५ ॥ संन्यासिनां कृत्यमाह–संन्यासस्तु स्वमित्रपुत्रकलत्रबंध्वादीन् । शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाशेषकर्माणि संन्यस्य दंडमाच्छादनं कौपीनं च प्रैषमंत्रोच्चारणपूर्वकं परिग्रहेदिति । संन्यासो यस्यास्तीति संन्यासी । अस्यावस्थाभेदेन चातुर्विध्यं दर्शयति–हंसमिति । हंसस्तु यथा जातस्तथा रूपधरो निर्द्वंद्वो निष्परिग्रहो ब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं परेच्छया भैक्ष्यमाहरन्नुदरमात्रेण लाभालाभसमः शुक्लध्यान-

परोऽध्यात्मनिष्ठश्चतुर्थभूमिकारूढः शुभाशुभकर्मनिर्मूलनपरः । शून्यागारे देवतागृहे तृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकोटरनिर्झरस्थंडिलेष्वनुकृतवासप्रयत्नो निर्ममः सन्निवसतीति हंसो नामेति १, परम हंसस्तु दंडं कौपीनं न चाच्छादनमाचरति । विधिनिषेधातीतो यो ब्रह्मवेदांतेषु पूर्णानंदैकबोधः परमात्मेति निरूपितस्तद्ब्रह्माहमस्मीत्येवं चतुर्थादिभूमिकासु सर्वदा भवन्नेव सर्वभूमिकारूढो ध्यातृध्येयविभागरहितो ब्रह्मानंदविलीनवृत्तित्वाच्छरीरमपि नानुसंधत्ते । एतदेवोक्तं श्रीभागवते–'देहं विनश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं ॥ दैवादपेतमथ दैववशादुपेतं वासो यथा परिकृतं मदिरामदांधः' ॥ इत्ययं योगी शीतोष्णसुखदुःखमानापमानषड्ूर्म्यादिभिर्विवर्जितो भवति । निरुद्धाशेषचित्तवृत्तेर्योगिनः शीतादिकं नास्ति तत्प्रत्ययाभावात् । यथा लीलायामासक्तस्य बालकस्याच्छादनादिरहितस्यापि हेमंतशिशिरयोः प्रातःकाले शीतं नास्ति तथा परमात्मन्यासक्तस्य योगिनः शीताद्यभावः । अतः कृतकृत्यो भवति इति च स्मर्यते । 'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्' ॥ इति परमहंसः २, अथ कुटीचकबहूदकौ विरक्तिभेदेन । यथा अत्र विरक्तिस्त्रिधा–तीव्रा तीव्रतरा मंदा चेति । तीव्रा यथा–'अस्मिञ्जन्मनि मा भूवन्पुत्रदारादयो मम ॥ इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता' ॥ इति । अस्मिन्वैराग्ये कुटीचकबहूदकसंन्यासाधिकारः । तथा चोक्तं–'यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत् ॥ कुटीचको बहूदश्चेदुभावेतौ त्रिदंडिनौ' ॥ कुटीचकस्तु यात्राद्यशक्त एकस्मिन्नेव तीर्थे संवसन् प्रत्यहं द्वादशसहस्रप्रणवजपं कुर्वन् यथोक्तकालभैक्ष्यमाहरन् महावाक्यार्थमवलोकयन्नात्मानुसंधाने चित्तवृत्तिमवरोधयन् कुट्यां पर्णशालायां चकास्ति ब्रह्मध्यानेन प्रकाशते इति कुटीचकः कुट्यामेव चरति यात्राद्यशक्तितया विचरतीति । यद्वा चर गतिभक्षणयोरिति धातोः कुट्यां चरति भक्षयति भिक्षान्नमिति कुटीचरो वा ३, बहूदकश्च तीर्थयात्रासु शक्तो ग्रामे

त्वेकरात्रं नगरे त्रिरात्रं तीर्थे सप्तरात्रं निवसन् त्रिकालस्नानपरो माधुकरीं वृत्तिमाश्रितो निवासस्थानासक्तिरहितो निजाश्रमधर्मरतः प्रणवमनुस्मरन् दंडादिकं परिगृह्य पुनस्तीर्थांतरं व्रजतीति। बह्वन्युदकानि तीर्थजलानि यस्येति बहूदक इति ४, तीव्रतरवैराग्ये तु हंसपरमहंससंन्यासाधिकारः। तीव्रतरं यथा–'पुनरावृत्तिसहितो लोको मे मास्तु कश्चन। इति तीव्रतरत्वे स्यान्मंदे न्यासो न कोऽपि हि' इति १, मंदवैराग्ये तु संन्यासाधिकार एव नास्ति। मंदो यथा 'पुत्रदारधनादीनां नाशे तात्कालिकी मतिः। धिक्संसारमितीदृक्स्याद्विरक्ते मदता हि सा' इति २, एतेषां विशेषलक्षणानि विश्वेश्वरपद्धतौ, परमहंसोपनिषदि,

गंगादीनामभावे हि पृथिव्यां स्थापनं स्मृतम् ॥ यत्र संति महानद्यस्तदा तास्वेव निक्षिपेत् ॥ १०७ ॥
इति श्रीगरुडपुराणे दाहास्थिसंचयकर्मनिरूपणो नाम दशमोऽध्यायः ॥ १० ॥ ॥ गरुड उवाच ॥
दशगात्रविधिं ब्रूहि कृते किं सुकृतं भवेत् ॥ पुत्राभावे तु कः कुर्यादिति मे वद केशव ॥१॥ श्रीभगवानुवाच ॥
शृणु तार्क्ष्य! प्रवक्ष्यामि दशगात्रविधिं तव ॥ यद्विधाय च सत्पुत्रो मुच्यते पैतृकादृणात् ॥ २ ॥
पुत्रः शोकं परित्यज्य धृतिमास्थाय सात्त्विकीम् ॥ पितुः पिंडादिकं कुर्यादश्रुपातं न कारयेत् ॥ ३ ॥

जीवन्मुक्तेश्च विशेषतो निरूपितानि, अत्र तु विस्तरभयान्न लिखितानि। श्लोकार्थस्तु स्पष्ट एव ॥ ६ ॥ १०७ ॥ इति टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ अस्थिसंचयनादूर्ध्वं दशगात्रं समाचरेत् ॥ इति श्रुत्वा खगः पूर्वं तदेव परिपृच्छति ॥ १ ॥ एकादशेऽस्मिन्प्रोवाच शोकापनयनं वचः। अग्रजे पिंडदातारं दशगात्रविधिं हरिः ॥ २ ॥ दशगात्रेति ॥ १ ॥ शृण्विति ॥ २ ॥ सात्त्विकी धृतिर्गीतायां प्रोक्ता–'धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः ॥ योगेनाव्यभिचारिण्या धृतिः सा पार्थ! सात्त्विकी'

इति ॥ ३ ॥ क्रियायामश्रुपातस्य निषेधमाह–श्लेष्मेति । निरर्थकात् व्यर्थात् ॥ ४ ॥ तदेवाह–यदीति सप्तभिः । निधनं गतः मृत्युं प्राप्तः ॥ ५ ॥ अपरिहार्ये दूरीकर्तुं अशक्यम् ॥ ६ ॥ उपायाभावादपि शोको नोचित इत्याह–नहीति ॥ ७ ॥ भावानां दुःखादीनां प्रतीकारः दूरीकरणोपायः ॥ ८ ॥ 'संयोगो विप्रयोगांतो मरणांतं हि जीवितम्'इति न्यायमाह–नायमिति ॥ ९ ॥

श्लेष्माश्रु बांधवैर्मुक्तं प्रेतो भुंक्ते यतोऽवशः ॥ अतो न रोदितव्यं हि तदा शोकान्निरर्थकात् ॥ ४ ॥
यदि वर्षसहस्राणि शोचतेऽहर्निशं नरः ॥ तथापि नैव निधनं गतो दृश्येत कर्हिचित् ॥ ५ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ तस्मादपरिहार्येऽर्थे न शोकं कारयेद्बुधः ॥ ६ ॥
नहि कश्चिदुपायोऽस्ति दैवो वा मानुषोऽपि वा ॥ यो हि मृत्युवशं प्राप्तो जंतुः पुनरिहाव्रजेत् ॥ ७ ॥
अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ॥ तदा दुःखैर्न युज्येरन्नलरामयुधिष्ठिराः ॥ ८ ॥
नायमत्यंतसंवासः कस्यचित्केनचित्सह ॥ अपि स्वस्य शरीरेण किमुतान्यैः पृथग्जनैः ॥ ९ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य विश्रमेत् ॥ विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ १० ॥
यत्प्रातः संस्कृतं भोज्यं सायं तच्च विनश्यति ॥ तदन्नरससंपुष्टे काये का नाम नित्यता ॥ ११ ॥
भैषज्यमेतद्दुःखस्य विचारं परिचिंत्य च ॥ अज्ञानप्रभवं शोकं त्यक्त्वा कुर्यात्क्रियां सुतः ॥ १२ ॥



उक्तमेवार्थं दृष्टांतेन द्रढयति–यथेति ॥ १० ॥ यस्य कारणमेव विनाशि तदा तत्कार्यस्य का कथेत्याह–यदिति । संस्कृतं सुगंधिद्रव्यैः पाचितमपि विनश्यति गतरसं भवति ॥ ११ ॥ भैषज्यं औषधं दुःखरोगनिवर्तकमित्यर्थः ॥ १२ ॥ ॥

शोकापनोदनोपायं निक्षिप्य पुत्राभावे तु कः कुर्यादिति प्रश्नस्योत्तरमाह—पुत्रेति पंचभिः । वधूः पत्नी । पुत्रवध्वभावे सोदरः कनिष्ठभ्राता ॥ १३ ॥ भ्रातुः पुत्रेण सर्वभ्रातॄणां पुत्रवत्त्वं स्यादित्याह—ज्येष्ठस्येति ॥ १४ ॥ एकजातानां एकस्मात्पितुः सकाशात्

पुत्राभावे वधूः कुर्याद्भार्याभावे च सोदरः ॥ शिष्यो वा ब्राह्मणस्यैव सपिंडो वा समाचरेत् ॥ १३ ॥
ज्येष्ठस्य वा कनिष्ठस्य भ्रातुः पुत्रैश्च पौत्रकैः ॥ दशगात्रादिकं कार्यं पुत्रहीने नरे खग ! ॥ १४ ॥
भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ॥ सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ १५ ॥
पत्न्यश्च बह्व्य एकस्य चैका पुत्रवती भवेत् ॥ सर्वास्ताः पुत्रवत्यः स्युस्तेनैकेन सुतेन हि ॥ १६ ॥
सर्वेषां पुत्रहीनानां मित्रः पिंडं प्रदापयेत् ॥ क्रियालोपो न कर्तव्यः सर्वाभावे पुरोहितः ॥ १७ ॥
स्त्री वाऽथ पुरुषः कश्चिदिष्टस्य कुरुते क्रियाम् ॥ अनाथप्रेतसंस्कारात्कोटियज्ञफलं लभेत् ॥ १८ ॥
पितुः पुत्रेण कर्तव्यं दशगात्रादिकं खग ! ॥ मृते ज्येष्ठेऽप्यतिस्नेहान्न कुर्वीत पिता सुते ॥ १९ ॥
बहवोऽपि यदा पुत्रा विधिमेकः समाचरेत् ॥ दशगात्रं सपिंडत्वं श्राद्धान्यन्यानि षोडश ॥ २० ॥
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥ विभक्तैस्तु पृथक्कार्यं श्राद्धं सांवत्सरादिकम् ॥ २१ ॥
तस्माज्ज्येष्ठः सुतो भक्त्या दशगात्रं समाचरेत्॥ एकभोजी भूमिशायी भूत्वा ब्रह्मपरः शुचिः॥२२॥

उत्पन्नानां मध्ये॥१५॥ सापत्नपुत्रेण स्त्रीणां पुत्रिता स्यादित्याह—पत्न्य इति ॥१६॥१७॥ इष्टस्य मित्रस्य ॥१८॥१९॥२०॥२१॥२२॥

'कृते किं सुकृतं भवेत्' इति प्रश्नस्योत्तरमाह–सप्तेति द्वाभ्याम् ॥ २३ ॥ २४ ॥ 'दशगात्रविधिं ब्रूहि' इति प्रश्नस्योत्तरमाह–कूप इत्यादि यावदध्यायसमाप्ति । मध्यमयामे द्वितीयप्रहरे प्रथमयाममध्याह्नयोर्देवपितृसमयत्वात् । अमंत्रकं संकल्परहितम् ॥ २५ ॥



सप्तवारं परिक्रम्य धरणीं यत्फलं लभेत् ॥ क्रियां कृत्वा पितुर्मातुस्तत्फलं लभते सुतः ॥ २३ ॥
आरभ्य दशगात्रं च यावद्वै वार्षिकं भवेत् ॥ तावत्पुत्रः क्रियां कुर्वन् गयाश्राद्धफलं लभेत् ॥ २४ ॥
कूपे तडागे वाऽऽरामे तीर्थे देवालयेऽपि वा ॥ गत्वा मध्यमयामे तु स्नानं कुर्यादमंत्रकम् ॥ २५ ॥
शुचिर्भूत्वा वृक्षमूले दक्षिणाभिमुखः स्थितः ॥ कुर्याच्च वेदिकां तत्र गोमयेनोपलिप्य ताम् ॥ २६ ॥
तस्यां पर्णे दर्भमयं स्थापयेत्कौशिकं द्विजम् ॥ तं पाद्यादिभिरभ्यर्च्य प्रणमेदतसीति च ॥ २७ ॥
तदग्रे च ततो दत्त्वा पिंडार्थं कौशमासनम् ॥ तस्योपरि ततः पिंडं नामगोत्रोपकल्पितम् ॥ २८ ॥
दद्यात्तंडुलपाकेन यवपिष्टेन वा सुतः ॥ उशीरं चंदनं भृंगराजपुष्पं निवेदयेत् ॥ धूपं दीपं च नैवेद्यं मुखवासं च दक्षिणाम् ॥२९॥ काकान्नं पयसोः पात्रे वर्धमानजलांजलीन् ॥ प्रेतायामुकनाम्ने च मद्दत्तमुपतिष्ठतु ॥३०॥ अन्नं वस्त्रं जलं द्रव्यमन्यद्वा दीयते च यत् ॥ प्रेतशब्देन यद्दत्तं मृतस्यानंत्यदायकम् ॥३१॥
तस्मादादिदिनादूर्ध्वं प्राक्सपिंडीविधानतः ॥ योषितः पुरुषस्यापि प्रेतशब्दं समुच्चरेत् ॥ ३२ ॥



॥ २६ ॥ पर्णे पर्णासने अतसीपुष्पसंकाशमिति मंत्रेण प्रणमेत् ॥ २७ ॥ कौशं दर्भासनम् ॥ २८ ॥ २९ ॥ पयश्च पयश्च पयसी, तयोर्नीरक्षीरयोः पात्रे ॥ ३० ॥ आनंत्यदायकं अनंतफलदं भवतीत्यर्थः ॥ ३१ ॥ आदिदिनात्प्रथमदिनात् ॥ ३२ ॥ ॥

तेनैवान्नेन चरुपायसादिना च नवदिनेषु नवपिंडान् ॥ ३३ ॥ नवमदिनस्य कृत्यं कथयति–नवमे इति त्रिभिः ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ दशमदिने विशेषमाह–दशमेऽहनीति । वा अथवा कलौ कलियुगे पलेन मांसेन पैतृकं पितृश्राद्धं न भवतीति तस्य मांसपिंडस्य निषेधात् माषेणैव दद्यादित्यर्थः । अत्र 'अतोऽस्य ह्यामिषं वर्ज्यं क्षुधा तस्य न शाम्यति' इति प्राचीनैस्त्वावश्यक-

प्रथमेऽहनि यत्पिंडो दीयते विधिपूर्वकम् ॥ तेनैव विधिनाऽन्नेन नव पिंडान्प्रदापयेत् ॥ ३३ ॥
नवमे दिवसे चैव सपिंडैः सकलैर्जनैः ॥ तैलाभ्यंगः प्रकर्तव्यो मृतकस्वर्गकाम्यया ॥ ३४ ॥
बहिः स्नात्वा गृहीत्वा च दूर्वा लाजासमन्विताः ॥ अग्रतः प्रमदां कृत्वा समागच्छेन्मृतालयम् ॥ ३५ ॥
दूर्वावत्कुलवृद्धिस्ते लाजा इव विकासता ॥ एवमुक्त्वा त्यजेद्गेहे लाजान्दूर्वासमन्वितान् ॥ ३६ ॥
दशमेऽहनि मांसेन पिंडं दद्यात्खगेश्वर ॥ माषेण तन्निषेधाद्वा कलौ न पलपैतृकम् ॥ ३७ ॥
दशमे दिवसे क्षौरं बांधवानां समुंडनम् ॥ क्रियाकर्तुः सुतस्यापि पुनर्मुंडनमाचरेत् ॥ ३८ ॥
मिष्टान्नैर्भोजयेदेकं दिनेषु दशसु द्विजम् ॥ प्रार्थयेत्प्रेतमुक्तिं च हरिं ध्यात्वा कृतांजलिः ॥ ३९ ॥
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ ये नमस्यंति गोविंदं न तेषां विद्यते भयम् ॥ ४० ॥
अनादिनिधनो देवः शंखचक्रगदाधरः ॥ अक्षय्यः पुंडरीकाक्ष! प्रेतमोक्षप्रदो भव ॥ ४१ ॥

त्वेनैवोक्तं तदन्ययुगाभिप्रायेणेति ॥ ३७ ॥ 'दशमे दिवसे क्षौरम्' इति द्वितीयश्लोकः स्मृत्यंतरदेशांतरधर्मानुसारेण ॥ ३८ ॥ ३९ ॥ अतसीति सुस्निग्धसुकोमलश्यामसुंदरम् ॥ ४० ॥ हे पुंडरीकाक्ष देव! त्वं अनादिनिधनोऽसि, अतो मोक्षप्रदो भवेति ॥ ४१ ॥

इति संप्रार्थनामंत्रं श्राद्धांते प्रत्यहं पठेत् ॥ स्नात्वा गत्वा गृहे दत्त्वा गोग्रासं भोजनं चरेत् ॥ ४२ ॥
इति श्रीगरुडपुराणे सारोद्धारे दशगात्रविधिनिरूपणो नामैकादशोऽध्यायः ॥ ११ ॥ ॥ गरुड उवाच ॥
एकादशदिनस्यापि विधिं ब्रूहि सुरेश्वर ! ॥ वृषोत्सर्गविधानं च वद मे जगदीश्वर ! ॥ १ ॥ श्रीभग-
वानुवाच ॥ एकादशेऽह्नि गंतव्यं प्रातरेव जलाशये ॥ और्ध्वदेहिक्रिया सर्वा करणीया प्रयत्नतः ॥ २ ॥
निमंत्रयेद्ब्राह्मणांश्च वेदशास्त्रपरायणान् ॥ प्रार्थयेत्प्रेतमुक्तिं च नमस्कृत्य कृतांजलिः ॥ ३ ॥
स्नानसंध्यादिकं कृत्वा ह्याचार्योऽपि शुचिर्भवेत् ॥ विधानं विधिवत्कुर्यादेकादशदिनोचितम् ॥ ४ ॥
अमंत्रं कारयेच्छ्राद्धं दशाहं नामगोत्रतः ॥ एकादशेऽह्नि प्रेतस्य दद्यात्पिंडं समंत्रकम् ॥ ५ ॥
सौवर्णं कारयेद्विष्णुं ब्रह्माणं रौप्यकं तथा ॥ रुद्रस्ताम्रमयः कार्यो यमो लोहमयः खग ! ॥ ६ ॥
पश्चिमे विष्णुकलशं गंगोदकसमन्वितम् ॥ तस्योपरि न्यसेद्विष्णुं पीतवस्त्रेण वेष्टितम् ॥ ७ ॥
पूर्वे तु ब्रह्मकलशं क्षीरोदकसमन्वितम् ॥ ब्रह्माणं स्थापयेत्तत्र श्वेतवस्त्रेण वेष्टितम् ॥ ८ ॥
उत्तरस्यां रुद्रकुंभं पूरितं मधुसर्पिषा ॥ श्रीरुद्रं स्थापयेत्तत्र रक्तवस्त्रेण वेष्टितम् ॥ ९ ॥
दक्षिणस्यां यमघटमिंद्रोदकसमन्वितम् ॥ कृष्णवस्त्रेण संवेष्ट्य तस्योपरि यमं न्यसेत् ॥ १० ॥

॥ ४२ ॥ इति टीकायामेकादशोऽध्यायः ॥ ११ ॥ कृत्यमेकादशाहस्य लक्षणानि वृषस्य च ॥ तदुत्सर्गं फलं चैव द्वादशे
प्राह माधवः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ॥ ॥ ॥

॥ ११ ॥ १२ ॥ १३ ॥ उपभुक्तं तस्य शरीरलग्नं। तदीप्सितं तस्य वांछितं च एतद्वस्त्रादि सर्वम् ॥ १४ ॥ १५ ॥ प्रेतस्य

मध्ये तु मंडलं कृत्वा स्थापयेत्कौशिकं सुतः ॥ दक्षिणाभिमुखो भूत्वापसव्येन च तर्पयेत् ॥ ११ ॥
विष्णुं विधिं शिवं धर्मं वेदमंत्रैश्च तर्पयेत् ॥ होमं कृत्वा चरेत्पश्चाच्छ्राद्धं दशघटादिकम् ॥ १२ ॥
गोदानं च ततो दद्यात्पितृणां तारणाय वै ॥ गौरेषा हि मया दत्ता प्रीतये तेऽस्तु माधव ! ॥ १३ ॥
उपभुक्तं तु तस्यासीद्वस्त्रभूषणवाहनम् ॥ घृतपूर्णं कांस्यपात्रं सप्तधान्यं तदीप्सितम् ॥ १४ ॥
तिलाद्यष्टमहादानमंतकाले न चेत्कृतम् ॥ शय्यासमीपे धृत्वैतद्दानं तस्याः प्रदापयेत् ॥ १५ ॥
प्रक्षाल्य विप्रचरणौ पूजयेदंबरादिभिः ॥ सिद्धान्नं तस्य दातव्यं मोदकापूपकाः पयः ॥ १६ ॥
स्थापयेत्पुरुषं हैमं शय्योपरि तदा सुतः ॥ पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥ १७ ॥
प्रेतस्य प्रतिमायुक्ता सर्वोपकरणैर्वृता ॥ प्रेतशय्या मया ह्येषा तुभ्यं विप्र ! निवेदिता ॥ १८ ॥
इत्याचार्याय दातव्या ब्राह्मणाय कुटुंबिने ॥ ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् ॥ १९ ॥
एवं शय्याप्रदानेन श्राद्धेन नवकादिना ॥ वृषोत्सर्गविधानेन प्रेतो याति परां गतिम् ॥ २० ॥
एकादशेऽह्नि विधिना वृषोत्सर्गं समाचरेत् ॥ हीनांगं रोगिणं बालं त्यक्त्वा कुर्यात्सलक्षणम् ॥ २१ ॥
रक्ताक्षः पिंगलो यस्तु रक्तः शृंगे गले खुरे ॥ श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य विधीयते ॥ २२ ॥

 शय्यादानविधिमाह–प्रक्षाल्येति चतुर्भिः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ब्राह्मणादिवर्णानामसाधारणवृषस्य लक्ष-

णान्याह—रक्ताक्ष इति द्वाभ्याम् ॥ २२ ॥ शस्यते विहितो भवति ॥ २३ ॥ सर्ववर्णसाधारणं वृषं कथयति—य इत्यादिषड्भिः ॥ २४ ॥ पंचप्रकारं नीलवृषं दर्शयति, किंतूक्तलक्षणस्यैवेत्याह—चरणा इति । गोपतेः वृषस्य ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ उक्तलक्षणो वृषो गृहे न धार्यः । तं भारवाहकं न कुर्यादित्यर्थः । यथा कपिला गौर्ब्राह्मणातिरिक्तवर्णैर्गृहे धार्या न भवति, किंतु

सुस्निग्धवर्णो यो रक्तः क्षत्रियस्य विधीयते ॥ पीतवर्णश्च वैश्यस्य कृष्णः शूद्रस्य शस्यते ॥ २३ ॥
यस्तु सर्वांगपिंगः स्याच्छ्वेतः पुच्छे पदेषु च ॥ स पिंगो वृष इत्याहुः पितॄणां प्रीतिवर्धनः ॥ २४ ॥
चरणास्तु मुखं पुच्छं यस्य श्वेतानि गोपतेः ॥ लाक्षारससवर्णो यः स नील इति कीर्तितः ॥ २५ ॥
लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः ॥ पिंगः खुरविषाणाभ्यां रक्तनीलो निगद्यते ॥ २६ ॥
सर्वांगेष्वेकवर्णो यः पिंगः पुच्छे खुरेषु यः ॥ तं नीलपिंगमित्याहुः पूर्वजोद्धारकारकम् ॥ २७ ॥
पारावतसवर्णस्तु ललाटे तिलकान्वितः ॥ तं बभ्रुनीलमित्याहुः पूर्णं सर्वांगशोभनम् ॥ २८ ॥
नीलः सर्वशरीरेषु रक्तश्च नयनद्वये ॥ तमप्याहुर्महानीलं नीलः पंचविधः स्मृतः ॥ २९ ॥
अवश्यमेव मोक्तव्यो न स धार्यो गृहे भवेत् ॥ तदर्थमेषा चरति लोके गाथा पुरातनी ॥ ३० ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ गौरीं विवाहयेत्कन्यां नीलं वा वृषमुत्सृजेत् ॥ ३१ ॥ 

दातव्या एव तथैवायमप्यवश्यं मोक्तव्य एवेति । तदर्थं एतस्मिन्नेवार्थे पुरातनी सर्वशास्त्रप्रसिद्धा गाथा स्मृतिश्चरति लोके विख्यातिं याति ॥ ३० ॥ तामेवाह—एष्टव्या वांछितव्याः । मम बहवः पुत्राः संत्वितीच्छा कर्तव्येत्यर्थः । तत् किमर्थमिति चेत्त-

त्राह–यदीति । बहुष्वेकोऽपि गयां गच्छेत्, एकः गौरीमष्टवर्षां कन्यां विवाहयेत्, नीलमुक्तलक्षणं मोचयेदिति च हेतोः, एक एव चेत्तदा गृहकार्य एव व्यग्रो भवेत् तस्य गयादिपितृमुक्तिकृत्येऽवसराभावादिति भावः ॥ ३१ ॥ अन्यः वृषोत्सर्गाद्यकर्ता इत्यकरणेऽपमानोक्तिः ॥ ३२ ॥ करणे तु केवलं पितुरेव मुक्तिर्न, किंतु सर्वपितृणामेवेत्याह–रौरवादिष्विति ॥ ३३ ॥ स्वर्गताः स्वर्गे

स एव पुत्रो मंतव्यो वृषोत्सर्गं तु यश्चरेत् ॥ गयायां श्राद्धदाता च योऽन्यो विष्ठासमः किल ॥ ३२ ॥
रौरवादिषु ये केचित्पच्यंते यस्य पूर्वजाः ॥ वृषोत्सर्गेण तान्सर्वांस्तारयेदेकविंशतिम् ॥ ३३ ॥
वृषोत्सर्गं किलेच्छंति पितरः स्वर्गता अपि ॥ अस्मद्वंशे सुतः कोऽपि वृषोत्सर्गं करिष्यति ॥ ३४ ॥
तदुत्सर्गाद्वयं सर्वे यास्यामः परमां गतिम् ॥ सर्वयज्ञेषु चास्माकं वृषयज्ञो हि मुक्तिदः ॥ ३५ ॥
तस्मात्पितृविमुक्त्यर्थं वृषयज्ञं समाचरेत् ॥ यथोक्तेन विधानेन कुर्यात्सर्वप्रयत्नतः ॥ ३६ ॥
ग्रहाणां स्थापनं कृत्वा तत्तन्मंत्रैश्च पूजनम् ॥ होमं कुर्याद्यथाशास्त्रं पूजयेद्वृषमातुरः ॥ ३७ ॥
वत्सं वत्सीं समानाय्य बध्नीयात्कंकणं तयोः ॥ वैवाह्येन विधानेन स्तंभमारोपयेत्तदा ॥ ३८ ॥
स्नापयेच्च वृषं वत्सीं रुद्रकुंभोदकेन च ॥ गंधमाल्यैश्च संपूज्य कारयेच्च प्रदक्षिणाम् ॥ ३९ ॥
त्रिशूलं दक्षिणे पार्श्वे वामे चक्रं प्रदापयेत् ॥ तं विमुच्यांजलिं बद्ध्वा पठेन्मंत्रमिमं सुतः ॥ ४० ॥

स्थिता अपि इच्छंति परमगतिप्राप्त्यर्थम् ॥ ३४ ॥ ३५ ॥ सर्वप्रयत्नतः यदि देशे नास्ति तदा देशांतरादप्यानीय कर्तव्य एवेत्यर्थः ॥ ३६ ॥ विधानमाह–ग्रहाणामिति सप्तभिः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ॥

वायुस्थाने हृदयादाकंठं वायुस्थानं तस्मिन् । एवमुक्तप्रकारेण सर्वस्वरूपेण सर्वात्मकविराट्स्वरूपेण स्वदेहे चिंतयेत् इति मूलधारणा ॥ ६८ ॥ प्रथमषट्चक्रचिंतनात्मकसूक्ष्मधारणामाह–सदेत्यादि ॥ ६९ ॥ जपानुष्ठानं विना सहजश्वासरूपा जप्ता

वायुस्थाने स्थितः केतुः शरीरे ग्रहमण्डलम् ॥ एवं सर्वस्वरूपेण चिंतयेदात्मनस्तनुम् ॥ ६८ ॥
सदा प्रभातसमये बद्धपद्मासनः स्थितः ॥ षट्चक्रचिंतनं कुर्याद्यथोक्तमजपाक्रमम् ॥ ६९ ॥
अजपा नाम गायत्री मुनीनां मोक्षदायिनी ॥ अस्याः संकल्पमात्रेण सर्वपापैः प्रमुच्यते ॥ ७० ॥
शृणु ताक्ष्र्य ! प्रवक्ष्येऽहमजपाक्रममुत्तमम् ॥ यं कृत्वा सर्वदा जीवो जीवभावं विमुंचति ॥ ७१ ॥
मूलाधारः स्वाधिष्ठानं मणिपूरकमेव च ॥ अनाहतं विशुद्ध्याख्यमाज्ञाषट्चक्रमुच्यते ॥ ७२ ॥
मूलाधारे लिंगदेशे नाभ्यां हृदि च कंठगे ॥ भ्रुवोर्मध्ये ब्रह्मरन्ध्रे क्रमाच्चक्राणि चिंतयेत् ॥ ७३ ॥
आधारं तु चतुर्दलानलसमं वासांतवर्णाश्रयं स्वाधिष्ठानमपि प्रभाकरसमं बालांतषट्पत्रकम् ॥
रक्ताभं मणिपूरकं दशदलं डाद्यं फकारांतकं पत्रैर्द्वादशभिस्त्वनाहतपुरं हैमं कठांतावृतम् ॥ ७४ ॥
पत्रैः सस्वरषोडशैः शशधरज्योतिर्विशुद्धांबुजं हंसेत्यक्षरयुग्मकं द्वयदलं रक्ताभमात्रांबुजम् ॥
तस्मादूर्ध्वगतं प्रभासितमिदं पद्मं सहस्रच्छदं सत्यानन्दमयं सदा शिवमयं ज्योतिर्मयं शाश्वतम् ॥ ७५ ॥

भवतीत्यजपामुनीनां मननशीलानां संकल्पं गायत्री च गुरुमुखाज्ज्ञातव्यम् ॥ ७० ॥ सर्वदा कृत्वा एतदाचरणं नित्यकर्मैव भवति न तु नैमित्तिकमिति । जीवभावं विमुंचति । ब्रह्मस्वरूपो भवतीत्यर्थः ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ अत्र सदाचारं प्रमाणयति–एतानिति । ब्रह्ममयूखान्सर्ववेदमयस्य ब्रह्मणः किरणरूपान् तदभिन्नानित्यर्थः । चक्रगतानमरान्षट्चक्रस्थितान् । श्रीगणेशादिदेवान् ऋषीणां संप्रदायमार्गेषु ये आरुणादयो मुनयस्तेऽपि चिंतयंति उपासते । तदुक्तं वेदस्तुतौ 'उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम्'



गणेशं च विधिं विष्णुं शिवं जीवं गुरुं ततः ॥ व्यापकं च परं ब्रह्म क्रमाचक्रेषु चिंतयेत् ॥ ७६ ॥
एकविंशत्सहस्राणि षट्शतान्यधिकानि च ॥ अहोरात्रेण श्वासस्य गतिः सूक्ष्मा स्मृता बुधैः ॥ ७७ ॥
हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ हंसो हंसेति मंत्रेण जीवो जपति तत्त्वतः ॥ ७८ ॥
षट्शतं गणनाथाय षट्सहस्रं तु वेधसे ॥ षट्सहस्रं च हरये षट्सहस्रं हराय च ॥ ७९ ॥
जीवात्मने सहस्रं च सहस्रं गुरवे तथा ॥ चिदात्मने सहस्रं च जपसंख्यां निवेदयेत् ॥ ८० ॥
एतांश्चक्रगतान्ब्रह्म मयूखान्मुनयोऽमरान् ॥ सत्संप्रदायवेत्तारश्चिंतयंत्यारुणादयः ॥ ८१ ॥
शुकादयोऽपि मुनयः शिष्यानुपदिशंति च ॥ अतः प्रवृत्तिं महतां ध्यात्वा ध्यायेत्सदा बुधः ॥ ८२ ॥

इति ॥ ८१ ॥ शिष्यान्परीक्षितादीन् । तदुक्तं द्वितीये सद्योमुक्तिस्थले । 'स्वपार्ष्णिनापीड्य गुदं ततोऽनिलस्थानेषु षट्सून्नमयेज्जितक्लमः । नाभ्यां स्थितं हृद्यवरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ॥ ततोऽनुसंधाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत । तस्माद्भ्रुवोरंतरमुन्नयेत निर्भिद्य मूर्धन्विसृजेत्परं गतः' इति । एतद्व्याख्यानं श्रीधरस्वामिभिः कृतं ज्ञातव्यम् ॥ ८२ ॥

अनन्यधीः एकाग्रचित्तः सन् ॥ ८३ ॥ रंध्रे ब्रह्मरंध्रांतर्गते अधोमुखपंकजे श्रीगुरुं ध्यायेत् । तदुक्तं रुद्रयामले—'सहस्रदल-पंकजे सकलशीतरश्मिप्रभे वराभयकरांबुजं विमलगंधपुष्पांबरम् । प्रसन्नवदनेक्षणं सकलदेवतारूपिणं स्मरेच्छिरसि हंसगं जननरोगवैद्यं गुरुम्' इति ॥ ८४ ॥ पंचोपचारैः मनसा कल्पितैः पंचभूतात्मकगंधपुष्पधूपदीपनैवेद्यैः । तद्यथा लं पृथिव्यात्मकंगंधं स० हं आकाशात्मकं पुष्पं० यं वाय्वात्मकं धूपं० रं तेजआत्मकं दीपं० वं अमृतात्मकं नैवे० इति तत्स्तवेन 'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः' इति गुरुस्तोत्रेण ॥ ८५ ॥ परात्परब्रह्मकुलां कुंडलिनीं

कृत्वा च मानसीं पूजां सर्वचक्रेष्वनन्यधीः ॥ ततो गुरूपदेशेन गायत्रीमजपां जपेत् ॥ ८३ ॥
अधोमुखे ततो रन्ध्रे सहस्रदलपंकजे ॥ हंसगं श्रीगुरुं ध्यायेद्वराभयकरांबुजम् ॥ ८४ ॥
क्षालितं चिंतयेद्देहं तत्पदामृतधारया ॥ पंचोपचारैः संपूज्य प्रणमेत्तत्स्तवेन च ॥ ८५ ॥
ततः कुंडलिनीं ध्यायेदारोहादवरोहतः ॥ षट्चक्रकृतसंचारां सार्धत्रिवलयां स्थिताम् ॥ ८६ ॥

आरोहे तु प्रकाशमानां अवरोहे च अमृतं स्रवंतीं ध्यायेत् । तदुक्तं योगशास्त्रे—'प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणेऽप्यमृतायमानाम् । अतः पदं व्योम सुसंचरंतीं ध्यायेत्सदा कुंडलिनीं पराख्याम्' इति । आरोहावरोहश्च श्रीशंकरस्वामिचरणैरप्युक्तोऽस्ति सौंदर्यलहर्यां 'महीं मूलाधारे कमपि मणिपूरे हुतवहम्' इत्यारोहः । अवरोहस्तु 'सुधाधारासारैश्चरणयुगुलांतर्विगलितैः' इति । एतदेवाह—षडिति । मूलाधारादिषट्चक्रेषु कृतः संचारः आरोहावरोहक्रमेण गमनं यया सार्धं त्रिवलयां प्रसुप्तभुजंगाकारां मूलाधारे स्थिताम् ॥ ८६ ॥ ॥ ॥ ॥ ॥

धाम मत्प्राप्तिस्थानं रंध्राद्बहिर्गतं ब्रह्मरंध्राद्ब्रह्मलोकांतं प्राप्तं तेन यथा सुषुम्नामार्गेण गता योगिनः विष्णोः पदं मम स्वरूपमेव यांति पुनर्मृत्युमुखे संसारे न पतंतीत्यर्थः। तदुक्तं वेदस्तुतौ–'तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुखे इति ॥ ८७ ॥ मच्चिंतितं मया श्रीकृष्णरूपेण ध्यातम्। तदुक्तं दशमे सप्ततितमेऽध्याये 'ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः। दध्यौ प्रसन्नकरण आत्मानं तमसः परम्। एकं स्वयंज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम्। ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतम्' इति ॥ ८८ ॥ तद्विना तद्गुरूपदेशं विना पतनं

ततो ध्यायेत्सुषुम्नाख्यं धाम रंध्राद्बहिर्गतम् ॥ तथा तेन गता यांति तद्विष्णोः परमं पदम् ॥ ८७ ॥
ततो मच्चिंतितं रूपं स्वयंज्योतिः सनातनम् ॥ सदानंदं सदा ध्यायेन्मुहूर्ते ब्राह्मसंज्ञके ॥ ८८ ॥
एवं गुरूपदेशेन मनो निश्चलतां नयेत् ॥ नतु स्वेन प्रयत्नेन तद्विना पतनं भवेत् ॥ ८९ ॥
अंतर्यागं विधायैवं बहिर्यागं समाचरेत् ॥ स्नानसंध्यादिकं कृत्वा कुर्याद्धरिहरार्चनम् ॥ ९० ॥
देहाभिमानिनामंतर्मुखी वृत्तिर्न जायते ॥ अतस्तेषां तु मद्भक्तिः सुकरा मोक्षदायिनी ॥ ९१ ॥

संसारे जन्ममरणमेव भवेन्न तु मोक्षः। तदुक्तं श्रीशुकेन–विजितहृषीकवायुभिरदांतमनस्तुरगं य इह यतंति यंतुमतिलोलमुपायखिदः ॥ व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज संत्यक्तकर्णधरा जलधौ' इति ॥ ८९ ॥ अंतर्यागं मानसोपचारैः पूर्वोक्तचक्रेषु श्रीगणेशादिपूजनम् बहिर्यागं यथालब्धोपचारैः श्रीहरहरिपूजनम् ॥ ९० ॥ देहाभिमानिनां तु नित्यप्रवणत्वस्य दुर्घटत्वाद्दुर्लभो मोक्षः। मद्भक्तानां तु मत्प्रसादादनायासत एव मुक्तिर्भवतीत्याह–देहेति चतुर्भिः ॥ ९१ ॥

समीचीनः श्रेष्ठतरः ॥ ९२ ॥ ब्रह्मादिभिर्निश्चितत्वात् । तदुक्तं द्वितीये—'न ह्यतोऽन्यः शिवः पंथा विशतः संसृताविह । वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥ भगवान्ब्रह्म कात्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्' ॥ ९३ ॥ नावसीदति पुनर्जन्मादिदुःखं न प्राप्नोति, किंतु मुक्तो भवतीत्यर्थः ॥ ९४ ॥ 'यथा विचारं कुरुते देहेऽस्मिन्सुकृती नरः' इति प्रश्नस्योत्तरं समाधायोपसंहरति—एवमिति । सनातनं विदेहकैवल्यम् ॥ ९५ ॥ इति श्रीगरुडपुराणे टीकायां

तपोयोगादयो मोक्षमार्गाः संति तथापि च ॥ समीचीनस्तु मद्भक्तिमार्गः संसरतामिह ॥ ९२ ॥
ब्रह्मादिभिश्च सर्वज्ञैरयमेव विनिश्चितः ॥ त्रिवारं वेदशास्त्राणि विचार्य च पुनः पुनः ॥ ९३ ॥
यज्ञादयोऽपि सद्धर्माश्चित्तशोधनकारकाः ॥ फलरूपा च मद्भक्तिस्तां लब्ध्वा नावसीदति ॥ ९४ ॥
एवमाचरणं तार्क्ष्य! करोति सुकृती नरः ॥ संयोगेन च मद्भक्त्या मोक्षं याति सनातनम् ॥ ९५ ॥
इति श्रीगरुडपुराणे सारोद्धारे सुकृतिजनजन्माचरणनिरूपणं नाम पंचदशोऽध्यायः ॥ १५ ॥
गरुड उवाच ॥ श्रुता मया दयासिंधो! ह्यज्ञानाज्जीवसंसृतिः ॥ अधुना श्रोतुमिच्छामि मोक्षोपायं सनातनम् ॥ १ ॥ ॥ ॥ ॥ ॥

पंचदशोऽध्यायः ॥ १५ ॥ ॥ प्रोक्ता पंचदशाध्यायैः पापपुण्यात्मिका गतिः ॥ षोडशेऽस्मिन्हरिः प्राह मोक्षोपायं सतां मतम् ॥ १ ॥ पूर्वाध्यायांते 'मोक्षं याति सनातनम्' इत्युक्तं तदिदानीं मोक्षोपायमेव पृच्छति—श्रुतेति चतुर्भिः । हे भगवन्! इह असारे संसारे जन्ममरणानामनंतत्वात् सदा दुःखातुराणां मोक्षोपायमजानतां जीवानां केनोपायेन मोक्षः स्यादिति वदेति

समुच्चयार्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अत्रोत्तरं श्रीभगवानुवाच—हे गरुड ! परब्रह्मस्वरूपी कश्चिद्देवोऽस्ति ॥ ५ ॥ ६ ॥ तस्य अनाद्यविद्योपहतात् अविद्यायां प्रतिबिंबात् अंश इवांशस्तस्माज्जीव इतिसंज्ञो भगवति अभेदे दृष्टांतः ॥ ७ ॥ यथाग्नौ विस्फुलिंगका इति । यदि असौ जीवो निजानंदस्वरूपं विस्मृत्य देहधर्मानात्मन्यारोपयति तदाऽस्यानेकयोनिषु मोक्षगंधोऽपि नास्ति । यदा मानवो भूत्वा ज्ञानी भवेत्, ज्ञानं नाम 'ब्रह्मैवायं समः शांतः सच्चिदानंदलक्षणः । नाहं देहो हंसरूपो

भगवन्देवदेवेश शरणागतवत्सल ॥ असारे घोरसंसारे सर्वदुःखमलीमसे ॥ २ ॥ नानाविध-
शरीरस्था अनंता जीवराशयः ॥ जायंते च म्रियंते च तेषामंतो न विद्यते ॥ ३ ॥ सदा दुःखातुरा
एव न सुखी विद्यते क्वचित् ॥ केनोपायेन मोक्षेश ! मुच्यंते वद मे प्रभो ! ॥ ४ ॥ श्रीभगवानुवाच ॥
शृणु तार्क्ष्य ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥ यस्य श्रवणमात्रेण संसारान्मुच्यते नरः ॥ ५ ॥
अस्ति देवः परब्रह्मस्वरूपी निष्फलः शिवः ॥ सर्वज्ञः सर्वकर्ता च सर्वेशो निर्मलोऽद्वयः ॥ ६ ॥
स्वयंज्योतिरनाद्यंतो निर्विकारः परात्परः ॥ निर्गुणः सच्चिदानंदस्तदंशाज्जीवसंज्ञकः ॥ ७ ॥
अनाद्यविद्योपहतायथाग्नौ विस्फुलिंगकाः ॥ देहाद्युपाधिसंभिन्नास्ते कर्मभिरनादिभिः ॥ ८ ॥

ज्ञानमित्युच्यते बुधैः' इत्युक्तलक्षणः स्याच्चेत्तदा मोक्षं प्राप्नोतीति सप्तमेन संबंधः । अत्रायं वेदांतसिद्धांतः—यथांधकारादौ विकाररहिते रज्ज्वादौ सर्पाद्यारोपणं कृत्वा भयकंपादिकं वहेत्, एवमात्मापि स्वस्मिन् जीवत्वमारोप्य सद्वितीयं परिच्छिन्नं ज्ञात्वा दुःखसागरे मग्नो भवति । यदा शास्त्राचार्यप्रसादेन वाक्यार्थज्ञानमुत्पन्नं भवति तदा विवेकचक्षुषा स्वात्मानमखंडा-

नंदज्ञानैकरूपं संपश्यन् ततो नाहं जीवः परमात्माऽहमिति ज्ञात्वा भयदुःखादिरहितः सन्सुखी भवेत्। यथा च जलस्थसूर्यांशो जलस्य निमित्तस्यापाये सूर्यमेव गत्वा तेनैव रूपेण पुनर्नागच्छति यथा च बाह्यघटाद्युपाधिपरिच्छिन्नो घटाकाशो मुख्याकाशांशः सन् घटादेर्निमित्तस्यापाये मुख्याकाशं प्राप्य पुनर्न निवर्तते, एवं लिंगशरीरावच्छिन्नः परमात्मनोंशः मायिकलिंगशरीरापाये परमात्मानं प्राप्य न निवर्तते, किंतु तत्त्वज्ञानान्मोक्षो भवतीति। तथा चोक्तं श्रीशुकेन द्वादशस्कंधे–'घटे भिन्ने

सुखदुःखप्रदैः पुण्यपापरूपैर्नियंत्रिताः ॥ तत्तज्जातियुतं देहमायुर्भोगं च कर्मजम् ॥ ९ ॥
प्रतिजन्म प्रपद्यंते तेषामपि परं पुनः ॥ सुसूक्ष्मलिंगशारीरमामोक्षादक्षरं खग! ॥ १० ॥
स्थावराः कृमयश्चाजाः पक्षिणः पशवो नराः ॥ धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ ११ ॥
चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः ॥ सुकृतान्मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥ १२ ॥
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ॥ न मानुषं विनान्यत्र तत्त्वज्ञानं तु लभ्यते ॥ १३ ॥
अत्र जन्मसहस्राणां सहस्रैरपि कोटिभिः ॥ कदाचिल्लभते जंतुर्मानुष्यं पुण्यसंचयात् ॥ १४ ॥

यथाकाश आकाशे स्याद्यथा पुरा। एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः' इत्यध्यायार्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ अस्मिन्नध्याये प्रथमं ज्ञानहेतुं नरत्वं स्तुत्वा ततो ज्ञानजनकं वैराग्यं निरूप्य ततो ज्ञानवैराग्यरहितान् दांभिकान्विगर्ह्य ततस्तत्त्वज्ञानान्मोक्षो भवतीति प्रतिपाद्य अंते ज्ञानिनामातुरकृत्यं निरूपयतीत्यनेनैव क्रमेणाह–शरीरिणां जीवानां अन्यत्र पश्वादिशरीरेषु ज्ञानलाभो न भवेदित्यर्थः ॥ १३ ॥ ज्ञानहेतोर्मानुषशरीरस्य दुर्लभतामाह–अत्रेति ॥ १४ ॥ ॥

दुर्लभं प्राप्यापि यो मोक्षोपायं न करोति, स तु महापातक्येवेत्याह–सोपानभूतं मोक्षस्य साधनरूपम् ॥ १५ ॥ उत्तमं सर्वोत्तमं ब्राह्मणादिजन्यसौष्ठवं इंद्रियाणामप्रतिहतशक्तित्वं लब्ध्वापि य आत्महितं मोक्षोपायं न जानाति, स त्वात्मघातकः; स्वस्यैव नाशकर्तेत्यर्थः ॥ १६ ॥ विना देहेन शरीरसंयोगं विना कस्यापि देवादेर्जीवस्यापि पुरुषार्थो मोक्षो नास्ति इति व्यवहार-मार्गेऽपि धनं विना सबलशरीरं विना च तीर्थाटनादिपुरुषार्थो नास्ति तस्माद्धेतोर्द्वयं रक्षेत्, असत्कर्मसु न नियोजयेदित्यर्थः ।

सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ॥ यस्तारयति नात्मानं तस्मात्पापतरोऽत्र कः ॥ १५ ॥
नरः प्राप्योत्तमं जन्म लब्ध्वा चेंद्रियसौष्ठवम् ॥ न वेत्त्यात्महितं यस्तु स भवेद्ब्रह्मघातकः ॥ १६ ॥
विना देहेन कस्यापि पुरुषार्थो न विद्यते ॥ तस्माद्देहं धनं रक्षेत्पुण्यकर्माणि साधयेत् ॥ १७ ॥
रक्षयेत्सर्वदात्मानमात्मा सर्वस्य भाजनम् ॥ रक्षणे यत्नमातिष्ठेज्जीवन्भद्राणि पश्यति ॥ १८ ॥
पुनर्ग्रामः पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम् ॥ पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः ॥ १९ ॥
शरीररक्षणोपायाः क्रियंते सर्वदा बुधैः ॥ नेच्छंति च पुनस्त्यागमपि कुष्ठादिरोगिणः ॥ २० ॥

किंतु पुण्यकर्माणि साधयेदिति ॥ १७ ॥ आत्मा नरदेहः सर्वस्य मोक्षादेः पात्रं भवति । अतस्तस्य रक्षणे यत्नं योगाभ्या-समाचरेत् । भद्राणि सत्संगात्मध्यानानि बहुकल्याणानि ॥ १८ ॥ गता अपि ग्रामादयस्तु पुनरप्यायांति । शरीरं तु पुनः पुनर्नायाति, अतो रक्षयेदिति पूर्वेणैव संबंधः ॥ १९ ॥ उपायाः मृत्योर्वंचनाय समाध्यादयः । रोगिणोऽपि त्यागं तु नेच्छंति, ज्ञानहेतोर्नरशरीरस्य पुनः प्राप्तेर्दुर्लभत्वादिति भावः ॥ २० ॥ ॥ ॥ ॥

ननु अनित्यस्य रक्षणं किमर्थमिति चेत्तत्राह–तदिति ॥ २१ ॥ 'आत्मैव ह्यात्मनो बंधुरिति विद्यान्मुहुर्मुहुः' इति वचनात् स्वयमेवात्मानं तारयेदित्याह–आत्मैवेति । अहितेभ्यः असत्कर्मदुःसंगादिभ्यः ॥ २२ ॥ इहैव नरशरीरे एव । चिकित्सां दूरीकरणोपायम् । निरौषधं पथ्यादिदेहम् ॥ २३ ॥ अतोऽस्मिन्नेव सबलनरशरीरे तत्त्वाभ्यासं कुर्यादित्याह–व्याघ्रीवेति त्रिभिः । यावज्जरादयो नायांति, यावदयं देहश्च तिष्ठति स्वस्थो भवति, तावत्तत्त्वं समभ्यसेदिति त्रयाणां संबंधः ॥ २४ ॥ यदि तारुण्ये

तद्गोपितं स्याद्धर्मार्थं धर्मो ज्ञानार्थमेव च ॥ ज्ञानं तु ध्यानयोगार्थमचिरात्प्रविमुच्यते ॥ २१ ॥
आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ॥ कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति ॥ २२ ॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः ॥ गत्वा निरौषधं देशं व्याधिस्थः किं करिष्यति ॥ २३ ॥
व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटांबुवत् ॥ निघ्नंति रिपुवद्रोगास्तस्माच्छ्रेयः समभ्यसेत् ॥ २४ ॥
यावन्नाश्रयते दुःखं यावन्नायांति चापदः ॥ यावन्नेंद्रियवैकल्यं तावच्छ्रेयः समभ्यसेत् ॥ २५ ॥
यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समभ्यसेत् ॥ संदीप्ते को नु भवने कूपं खनति दुर्मतिः ॥ २६ ॥

विषयान् भुक्त्वा वार्धके तत्त्वाभ्यासं करिष्यामीति विचारः स तु व्यर्थ एवेत्याह–संदीप्ते इति । यथा संदीप्तभवनस्य शमनं नवखनितकूपोदकेन न संभवति तथा जरादिषु तत्त्वाभ्यासं हरिस्मरणं च न स्यादतः स्वस्थावस्थायामेव श्रेयः समभ्यसेदित्यर्थः । तदुक्तं भर्तृहरिणा–'यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेंद्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्संदीप्ते भवने तु कूपखनने प्रत्युद्यमः कीदृश' इति । उक्तं च गौतमेनापि–'कृष्ण

त्वदीयपदपंकजपंजरांते ह्यद्यैव मे विशतु मानसराजहंसः । प्राणप्रयाणसमये कफवातपित्तैः कंठावरोधनविधौ स्मरणं कुतस्ते' इति ॥ २५ ॥ २६ ॥ वैराग्योत्पादकवचनान्याह—काल इत्यादि । हितं मोक्षोपायं वेत्त्यपीति । हंत इति खेदे । न । प्रत्युत अहितमेवाचरतीति ॥ २७ ॥ जातानित्यादि । व्याघ्रीवेति श्लोकाशयः । तदुक्तं भर्तृहरिणा—'व्याघ्रीव तिष्ठति जरा परितर्जयंती रोगाश्च शत्रव इव प्रहरंति देहम् । आयुश्च संस्रवति भिन्नघटादिवांभो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवनं व्यापारैर्बहुभारकार्यगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा

कालो न ज्ञायते नानाकार्यैः संसारसंभवैः ॥ सुखं दुःखं जनो हंत न वेत्ति हितमात्मनः ॥ २७ ॥
जातानार्तान्मृतानापद्गस्तान्दृष्ट्वा च दुःखितान् ॥ लोको मोहसुरां पीत्वा न बिभेति कदाचन ॥ २८ ॥
संपदः स्वप्नसंकाशा यौवनं कुसुमोपमम् ॥ तडिच्चपलमायुष्यं कस्य स्याज्जानतो धृतिः ॥ २९ ॥
शतं जीवितमत्यल्पं निद्रालस्यैस्तदर्धकम् ॥ बाल्यरोगजरादुःखैरल्पं तदपि निष्फलम् ॥ ३० ॥
प्रारब्धव्ये निरुद्योगो जागर्तव्ये प्रसुप्तकः ॥ विश्वस्तव्यो भयस्थाने हा नरः को न हन्यते ॥ ३१ ॥

मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत्' इति ॥ २८ ॥ संपदादयः स्वप्नादिवज्जानतः कस्य विवेकिनो धृतिः स्यात्, न कस्यापीत्यर्थः ॥ २९ ॥ शतमिति । तदुक्तं भागवतेऽपि बालान् प्रति प्रह्लादेन—'पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः । निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः । मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः । जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः । दुरापूरेण कामेन मोहेन च बलीयसा । शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि' इति ॥ ३० ॥ प्रारब्धव्ये प्रारब्धुं योग्ये मोक्षो- ॥ ७१ ॥

पाये जागर्तव्ये ब्रह्मचिंतने भयस्थाने संसारे विश्वस्तव्यः विश्वासार्हो नरः को न हन्यते यमेन ? अपितु सर्व एवेत्यर्थः । हा इति करुणयानुतापः ॥ ३१ ॥ आक्रम्य जीवं वशीकृत्य स्थिते देहे जीवे सहैव जलबुद्बुदसमे स निर्भयः कथं तिष्ठति ॥ ३२ ॥ अहिते परिणामे विषोपमे विषये हितं ममेष्टलाभमिदमिति संज्ञा यस्येति ॥ अध्रुवे देहादौ अनर्थे दंभानृतादिपंचदशानर्थमूले धने अर्थः समप्रयोजनं सिद्धं इति विज्ञानं यस्य ईदृशो यो नरः स्यात् सः स्वं अर्थं मुक्तिप्रदं आत्मज्ञानरूपं स्वप्रयोजनं नैव

तोयफेनसमे देहे जीवेनाक्रम्य संस्थिते ॥ अनित्यप्रियसंवासे कथं तिष्ठति निर्भयः ॥ ३२ ॥
अहिते हितसंज्ञः स्यादध्रुवे ध्रुवसंज्ञकः ॥ अनर्थे चार्थविज्ञानः स्वमर्थं यो न वेत्ति सः ॥ ३३ ॥
पश्यन्नपि प्रस्खलति शृण्वन्नपि न बुद्ध्यति ॥ पठन्नपि न जानाति देवमायाविमोहितः ॥ ३४ ॥
तन्निमज्जज्जगदिदं गंभीरे कालसागरे ॥ मृत्युरोगजराग्राहैर्न कश्चिदपि बुद्ध्यते ॥ ३५ ॥
प्रतिक्षणमयं कालः क्षीयमाणो न लक्ष्यते ॥ आमकुंभ इवांभस्थो विशीर्णो न विभाव्यते ॥ ३६ ॥
युज्यते वेष्टनं वायोराकाशस्य च खंडनम् ॥ ग्रथनं च तरंगाणामास्थानायुषि युज्यते ॥ ३७ ॥

वेत्ति ॥ ३३ ॥ अहो देवमायाबलमित्याह–पश्यन्नपि आत्मज्ञानान्मोक्षो भवतीति जानन्नपि प्रस्खलति मोक्षमार्गाद्भ्रष्टो भवति, तदाचरणं विनेत्यर्थः ॥ ३४ ॥ इदं जगन्मरणादिग्राहैः कारणभूतैः कालसागरे निमज्जत् निमग्नं भवति तदपि न बुद्ध्यत्यहो ॥ ३५ ॥ विशीर्णो गलितो यथा न ज्ञायते तथा कालोऽपि सूक्ष्मगतित्वात् ॥ ३६ ॥ आयुरपि कालवत् क्षीयमाणं न लक्ष्यते इत्याह–वेष्टनं रोधनं युज्यते कुड्यादिभिः कर्तुं शक्यते । एवमघटना तु भवेदपि परं तु आयुषि आयुर्गमने आस्था

स्थिरता न युज्यत इत्यर्थः ॥ ३७ ॥ येन कालेन अपरिमिताः पृथिव्यादयोऽपि नश्यंति तदा सप्तवितस्तिकस्य का वार्तेत्याह– पृथिवीति ॥ ३८ ॥ स्वभक्ष्यहनने कालस्य दयालेशोऽपि नास्तीत्याह–अपत्यमिति । 'मे मे' इत्यजवचनानुकरणम् । मर्त्यो नरः स एवाजस्तम् ॥ ३९ ॥ कालः कृताकृतमपि न प्रतीक्षत इत्याह–इदमिति ॥ ४० ॥ अतोऽवश्यककार्ये विलंबो न कार्य इत्याह–

पृथिवी दह्यते येन मेरुश्चापि विशीर्यते ॥ शुष्यते सागरजलं शरीरस्य च का कथा ॥ ३८ ॥
अपत्यं मे कलत्रं मे धनं मे बांधवाश्च मे ॥ जल्पंतमिति मर्त्याजं हंति कालवृको बलात् ॥ ३९ ॥
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ॥ एवमीहासमायुक्तं कृतांतः कुरुते वशम् ॥ ४० ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥ नहि मृत्युः प्रतीक्षेत कृतं वाप्यथवाऽकृतम् ॥ ४१ ॥
जरादर्शितपंथानं प्रचंडव्याधिसैनिकम् ॥ मृत्युशत्रुमधिष्ठोऽसि त्रातारं किं न पश्यसि ॥ ४२ ॥
तृष्णासूचीविनिर्भिन्नं सिक्तं विषयसर्पिषा ॥ रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ ४३ ॥
बालांश्च यौवनस्थांश्च वृद्धान्गर्भगतानपि ॥ सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥ ४४ ॥
स्वदेहमपि जीवोऽयं मुक्त्वा याति यमालयम् ॥ स्त्रीमातृपितृपुत्रादिसंबंधः केन हेतुना ॥ ४५ ॥

श्व इति ॥ ४१ ॥ सामंत इवागतं मृत्युशत्रुं प्रत्यधिष्ठोऽसि स्थितोऽसि । अतस्त्रातारं परमेश्वरम् ॥ ४२ ॥ परिपक्वमांसपिंडवन्मृत्युर्मानवमश्नातीत्याह–तृष्णेति ॥ ४३ ॥ मृत्योः सर्वत्र तुल्यतामाह–बालानिति । आविशते अवश्यमायाति । तदुक्तं श्रीमद्भागवते–'मृत्युर्जन्मवतां वीर देहेन सह जायते । अद्य वाब्दशतांते वा मृत्युर्वै प्राणिनां ध्रुवः' इति ॥ ४४ ॥ सहचरः स्वदेहोऽपि

जीवेन सह नोपयाति । तर्हि पृथक् स्थितानां स्त्रीपुत्रादीनां किं प्रयोजनमित्याह—स्वदेहमिति । स्त्रीपुत्रादिसमुदायरूपसंसारस्यैव दुःखापत्सर्वपापानां मूलत्वात्सुखेप्सुस्तदा स किं मनसापि परित्यजेत् ॥ ४५ ॥ संसक्तस्तु कदापि न मुच्यत इत्याह–दुःखमूलमिति त्रिभिः । त्यागोऽत्र मनसैव । 'यन्मनसैव कृतं तदेव कृतं भवति न शरीरेण' इति श्रुतेः । तथा च चूडालयापि शिखिध्वजस्य मनस्त्याग एवांगीकृत इति ॥ ४६ ॥ प्रभवं उत्पत्तिस्थानम् । आश्रयं वृद्धिस्थानम् ॥ ४७ ॥ लोहादिपाशैस्तु शरीरेण

दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः ॥ तस्य त्यागः कृतो येन स सुखी नापरः क्वचित् ॥ ४६ ॥
प्रभवं सर्वदुःखानामालयं सकलापदाम् ॥ आश्रयं सर्वपापानां संसारं वर्जयेत्क्षणात् ॥ ४७ ॥
लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते ॥ पुत्रदारमयैः पाशैर्मुच्यते न कदाचन ॥ ४८ ॥
यावंतः कुरुते जंतुः संबंधान्मनसः प्रियान् ॥ तावंतोऽस्य निखन्यंते हृदये शोकशंकवः ॥ ४९ ॥
वंचिताशेषवित्तैस्तैर्नित्यं लोको विनाशितः ॥ हा हंत विषयाहारैर्देहस्थेंद्रियतस्करैः ॥ ५० ॥
मांसलुब्धो यथा मत्स्यो लोहशंकुं न पश्यति ॥ सुखे लुब्धस्तथा देही यमबाधां न पश्यति ॥ ५१ ॥

बद्धः स तु दृश्यमानवत्वात् परेणापि मुच्यते । पुत्रादिपाशैर्मनसा बद्धः केनापि न मुच्यते, अदृश्यत्वात् ॥ ४८ ॥ अतः पुत्रादिषु स्नेहसंबंधात् तद्गतदुःखशोकादिभिः व्यथितो भवति, अतस्तं न कुर्यादित्याह–यावंत इति । शोकरूपाः शंकवः कीलका निखन्यंते निपात्यंते; तेषामपगमे तन्नाशादिशोकानपगमादित्यर्थः ॥ ४९ ॥ वंचितान्यशेषधनानि यैः । विषयानाहर्तुं शीलं येषां ते । पक्षे,–विषयेभ्यो धनमाहरंति ते विषयाहारास्तैस्तस्करैर्लोको नित्यं विनाशितः । हा हंत इति खेदे ॥ ५० ॥ किंच परिणामे

विषोपमविषयसुखासक्तः पुमान् मत्स्यो वडिशदुःखमिव यमयातनां प्राप्नोतीत्याह–मांसलुब्ध इति ॥५१॥ हितहितं प्रवृत्तिनिवृत्तिहितम् । 'अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः' इत्यादिपंचश्लोकैर्गीतायामुक्तं तत्त्वज्ञानसाधनं तस्मिन्प्रवृत्तिं च । अहितं 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते' इत्यादिद्वादशश्लोकैर्भगवतोक्तमासुरभावं तस्मिन्निवृत्तिं च न जानंतः । अत एव नित्यं जन्मनि जन्मनि उन्मार्गमासुरमार्गं तं प्रति गच्छंति ये ते उदरंभरा नरके निपततीत्यर्थः । उक्तं च–'आसुरं भावमापन्ना मूढा जन्मनि जन्मनि ।

हिताहितं न जानंतो नित्यमुन्मार्गगामिनः ॥ कुक्षिपूरणनिष्ठा ये ते नरा नारकाः खग ! ॥ ५२ ॥
निद्रादिमैथुनाहाराः सर्वेषां प्राणिनां समाः ॥ ज्ञानवान्मानवः प्रोक्तो ज्ञानहीनः पशुः स्मृतः ॥ ५३ ॥
प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ ॥ रात्रौ मदननिद्राभ्यां बाध्यंते मूढमानवाः ॥ ५४ ॥
स्वदेहधनदारादिनिरताः सर्वजंतवः ॥ जायंते च म्रियंते च हा हंताज्ञानमोहिताः ॥ ५५ ॥
तस्मात्संगः सदा त्याज्यः सर्वस्त्यक्तुं न शक्यते ॥ महद्भिः सह कर्तव्यः संतः संगस्य भेषजम् ॥ ५६ ॥

मामप्राप्यैव कौंतेय ! ततो यांत्यधमां गतिम्' ॥५२॥ अतश्च हिताहितज्ञानहीनः सकलप्राणिसाधारणधर्ममूढः पशुरेवेत्याह—निद्रादीति ॥ ५३ ॥ किंच देहधर्मैरभिभूतानां मूढानां हिताहितज्ञानानुसंधानावसरोऽपि नास्तीत्याह–प्रभात इति ॥ ५४ ॥ अतो देहाद्यासक्तानां ज्ञानसाधनमोक्षरहितानां वर्षाकृमीणामिव तेषां वृथैव जन्ममरणे इत्याह–स्वदेहेति ॥ ५५ ॥ अतः संगो देहाद्यासक्तिरूपः यदि सर्वः परमहंसवत्त्यक्तुं न शक्यते तदा महतां संगः कर्तव्यः । ते हि पूर्वकृतसंगरोगभेषजं निवर्तका

भवंतीत्यर्थः ॥ ५६ ॥ किंच सत्संगादेव सन्मार्गदर्शनं भवति, नान्यथेत्याह–सत्संग इति । सतां तत्त्वज्ञानिनां संगस्तु सत्संप्रदायदर्शकत्वादेकं नयनं विवेकश्च आत्मस्वरूपस्य नित्यत्वदेहादेरनित्यत्वदर्शकत्वाद् द्वितीयं नयनं च यस्य नास्ति सोऽन्ध अमार्गगः वेददूषितभ्रष्टमार्गगतः कथं न स्यात् ? अपि तु स्यादेवेत्यर्थः ॥ ५७ ॥ एवं वैराग्योत्पादकवचनान्युक्त्वा तद्रहितान्दांभिकान्निंदति–स्वस्ववर्णाश्रमादिधर्माणां दांभिकत्वेनाचरणान्मुक्तिर्नास्ति किंतु तत्त्वज्ञानादेवेत्याह–स्वस्वेति त्रयो-

सत्संगश्च विवेकश्च निर्मलं नयनद्वयम् ॥ यस्य नास्ति नरः सोऽधः कथं न स्यादमार्गगः ॥ ५७ ॥
स्वस्ववर्णाश्रमाचारनिरताः सर्वमानवाः ॥ न जानंति परं धर्मं वृथा नश्यंति दांभिकाः ॥ ५८ ॥
क्रियायासपराः केचिद्व्रतचर्यादिसंयुताः ॥ अज्ञानसंवृतात्मानः संचरंति प्रतारकाः ॥ ५९ ॥
नाममात्रेण संतुष्टाः कर्मकांडरता नराः ॥ मंत्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥ ६० ॥
एकभुक्तोपवासाद्यैर्नियमैः कायशोषणैः ॥ मूढाः परोक्षमिच्छंति मम मायाविमोहिताः ॥ ६१ ॥

दशभिः । परं परमार्थनिष्ठं मोक्षधर्मम् । अतो दांभिका मिथ्याचारास्ते नश्यंति । मोक्षस्यालाभाद्वृथा जन्ममरणा भवंतीत्यर्थः ॥ ५८ ॥ क्रियासु कर्मसु आयासपराः शीतादिसहनप्रयासपरायणाः । व्रतचर्यासु क्षुत्तृड्भ्यां संयुताः । अज्ञानेति अविवेकावृतचित्ताश्च ते प्रतारका वंचका एव विचरंति, नतु परं धर्मं जानंतीति पूर्वेणैव संबंधः ॥ ५९ ॥ नाममात्रेण स्वर्गादिसुखेन होमाद्यैर्भ्रामिता मूढाः परोक्षं स्वर्गसुखं, यद्वा बुद्धिग्राह्यमतींद्रियं मोक्षसुखं ज्ञानं विना इच्छंतीत्यर्थः ॥ ६० ॥ अत्र हेतुर्मम मायेति ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एतदेव स्पष्टयति–देहदंडेन कायशोषणेनैव मुक्तिर्नास्ति; अंतर्गताविवेकस्य विद्यमानत्वात् । यथा वल्मीकस्य सर्पालयस्य ताडनादेव तन्मध्यगतभुजंगो न म्रियते तथा देहदंडनेनाविवेको न नश्यतीत्यर्थः ॥ ६२ ॥ अतोऽविवेकिनस्ते स्वयं नष्टाः परानपि नाशयंतीत्याह–जटेति । कीदृशाः ? दांभिकाः, तथा वेषं स्तब्धत्वं धारयंतीति ज्ञानधनानपि जनान्भ्रामयंतीत्यर्थः ॥ ६३ ॥ अतस्तेषां संगो न कर्तव्य इत्याह–संसारजेति । ब्रह्मज्ञोऽस्मीत्यत्र ब्रह्मनिष्ठा वयं । अतोऽस्माकं विषयसुखासक्तेर्दोषो नास्ति ।

देहदंडनमात्रेण का मुक्तिरविवेकिनाम् ॥ वल्मीकताडनादेव मृतः कुत्र महोरगः ॥ ६२ ॥
जटाभाराजिनैर्युक्ता दांभिका वेषधारिणः ॥ भ्रमंति ज्ञानिवल्लोके भ्रामयंति जनानपि ॥ ६३ ॥
संसारजसुखासक्तं ब्रह्मज्ञोऽस्मीति वादिनम् ॥ कर्मब्रह्मोभयभ्रष्टं तं त्यजेदंत्यजं यथा ॥ ६४ ॥
गृहारण्यसमा लोके रतव्रीडा दिगंबराः ॥ चरंति गर्दभाद्याश्च विरक्तास्ते भवंति किम् ॥ ६५ ॥
मृद्भस्मोद्धूलनादेव मुक्ताः स्युर्यदि मानवाः ॥ मृद्भस्मवासी नित्यं श्वा स किं मुक्तो भविष्यति ॥ ६६ ॥
तृणपर्णोदकाहाराः सततं वनवासिनः ॥ जंबूकाखुमृगाद्याश्च तापसास्ते भवंति किम् ॥ ६७ ॥

शुभाशुभकर्माणां लेपाभावादिति वादिनां सर्वकर्मब्रह्मध्यानपराङ्मुखं च तं बोधचंचुमंत्यजवत्त्यजेत्, श्वपाकवन्न स्पृशेदित्यर्थः ॥ ६४ ॥ किंच ये निर्लज्जाः स्त्रीणां समूहे तु नग्ना विचरंति ते गर्दभादिसमा एव, नतु विरक्ता इत्याह–गृहारण्यसमा इति ॥ ६५ ॥ सदा भस्मवासिनोऽपि श्वगर्दभादयो यथा मुक्ता न भवंति तथा सर्वांगमृद्भस्मधारणादपि मुक्तिर्नास्तीत्यर्थः ॥ ६६ ॥ किंचाविवेककृतदुराग्रहेण गृहान्नपरित्यागादेव तापसा न भवंति, किंतु ते तामसा एवेत्याह–तृणेति । तामसतापसा गीताया-

मुक्ताः 'मूढग्राहेणात्मनो यत्पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्' इति ॥ ६७॥ किंच मलिनभावनया गंगादितीरे स्थिता अपि योगिनो न भवंतीत्याह–आजन्मेति । उक्तं च–''प्रातः प्रातः प्रपश्यंति नर्मदां मत्स्यबंधकाः । न ते शिवपुरं यांति भावो हि भवकारणम्' इति भावः । शुद्धमलिनभावना हि पुनरस्य भवस्य जन्ममरणात्मकसंसारस्य कारणं भवतीत्ययमस्यार्थः ॥ ६८ ॥ ये चातिक्रूरा विवेकहीनाः अशास्त्रविहितोपवासादिभिर्जलान्नपरिहाराद्यैर्वात्मानं पीडयंति ते व्रतिनो न, किंत्वासुरनिश्चया एवेत्याह–पारावता इति । तदुक्तं गीतासु 'कर्षयंतः शरीरस्थं भूतग्राममचेतसः । मां चैवांतःशरी-

आजन्ममरणांतं च गंगादितटिनीस्थिताः ॥ मंडूकमत्स्यप्रमुखा योगिनस्ते भवंति किम् ॥ ६८ ॥
पारावताः शिलाहाराः कदाचिदपि चातकाः ॥ न पिबंति महीतोयं व्रतिनस्ते भवंति किम् ॥ ६९ ॥
तस्मादित्यादिकं कर्म लोकरंजनकारकम् ॥ मोक्षस्य कारणं साक्षात्तत्त्वज्ञानं खगेश्वर ! ॥ ७० ॥
षड्दर्शनमहाकूपे पतिताः पशवः खग ! ॥ परमार्थं न जानंति पशुपाशनियंत्रिताः ॥ ७१ ॥

रस्थं तान्विद्ध्यासुरनिश्चयान्' इति ॥ ६९ ॥ तस्मादिति हेतोः इत्यादिकं वर्णाश्रमादिधर्माचरणादिकं यत्कर्म तल्लोकानां मूढजनानां रंजनकारकं मोहकारणमेव, नतु तत्त्वज्ञानं विना मोक्षकारणमिति । तदुक्तं ज्ञानप्रशंसायाम्–'मीनः स्नानपरः फणी पवनभुङ् मेषश्च पर्णाशनो नीराशी खलु चातकः किमपरं शेते गुहां मूषकः । भस्मोद्धूलनतत्परः खलु खरो ध्यानानुरक्तो बकः सर्वेषामिह कारणं शृणु सखे ! ज्ञानं परं किं तपः' इति ॥ ७० ॥ एवं यथा सदंभा वर्णाश्रमधर्मादिक्रिया मुक्तेर्हेतुभूता नास्ति, तथा दंभरहितापि शास्त्रज्ञता ज्ञानं विना मोक्षप्रदा न भवतीत्याह–षडिति चतुर्दशभिः । खग हे गरुड ! षड्दर्शन-

महाकूपे षट्शास्त्ररूपांधकूपे पतिता ये अनात्मज्ञा द्विपदपशवस्ते परमार्थं ब्रह्मस्वरूपं न जानंति । प्रतिपादयंतोऽपि स्वयं नानुभवंति । अतः पशुवत्पाशेन अतिकठिनार्थविचारणरूपेण नियंत्रिता । बद्धा एव हि तिष्ठंतीति संबंधः ॥ ७१ ॥ घोरे अनंतत्वाद्भयंकरे इतस्ततः ग्रंथाद्ग्रंथांतराध्ययने ऊह्यमाना व्याकुलाः शोकादिषडूर्मीणां निग्रहे निरोधे ग्रस्ता व्यग्रा ईदृशाः कुतार्किकाः कुतर्कबलादद्वैतज्ञानपरा एव तिष्ठंति, नतु तज्जानंतीत्यर्थः ॥ ७२ ॥ अतो वेदादिज्ञातापि यः परमार्थं तत्त्वज्ञानं न वेत्ति, तदा विडंबकस्य उपहासकस्यैव तस्य अतत्त्वज्ञस्यापि तत्सर्वं ज्ञातृत्वं वक्तृत्वं च काकवद्भाषितं व्यर्थ-

वेदशास्त्रार्णवे घोरे ऊह्यमाना इतस्ततः ॥ षडूर्मिनिग्रहग्रस्तास्तिष्ठंति हि कुतार्किकाः ॥ ७२ ॥
वेदागमपुराणज्ञः परमार्थं न वेत्ति यः ॥ विडंबकस्य तस्यैव तत्सर्वं काकभाषितम् ॥ ७३ ॥
इदं ज्ञानमिदं ज्ञेयमिति चिंतासमाकुलाः ॥ पठंत्यहर्निशं शास्त्रं परतत्त्वपराङ्मुखाः ॥ ७४ ॥
वाक्यच्छन्दोनिबन्धेन काव्यालंकारशोभिताः ॥ चिंतया दुःखिता मूढास्तिष्ठंति व्याकुलेंद्रियाः ॥ ७५ ॥

मित्यर्थः ॥ ७३ ॥ किंच परतत्त्वविमुखानां शास्त्रपठनं ज्ञानमपि व्यर्थमेवेत्याह–इदमिति । ज्ञानं नाम ज्ञेयप्राप्तिसाधनरूपं 'अमा- नित्वमदंभित्वम्' इत्यादिगीतोक्तं । ज्ञेयं वै तज्ज्ञानगम्यं 'अनादिमत्परं ब्रह्म' इत्यादि । तत्रैवोक्तं ब्रह्मस्वरूपं तदिदं ज्ञानं ज्ञेयं चास्ति नास्ति वेति संशयचिंतया पठंति इति ॥ ७४ ॥ किंच वाक्यादिभिरज्ञदृष्ट्या शोभिता अपि मूढास्तत्त्वपराङ्मुखा दुःखिता एव तिष्ठंतीति । अत एव व्याकुलेंद्रियास्ते 'श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेंद्रियः । ज्ञानं लब्ध्वा परां शांतिमचिरेणाधि- गच्छति' इति गीतोक्तम् । संयतेंद्रियादिगुणैर्लभ्यज्ञानलाभाभावात् कदाचिदपि परमसुखिनो न भवंतीति भावः ॥ ७५ ॥ ॥ ७५ ॥

किंच शास्त्रज्ञानात् कुतर्कबलेन विपरीतार्थप्रतिपादनात् तत्त्वज्ञानं न भवतीत्याह–अन्यथेति । तत्त्वं तु तत्त्वमसीति गुरूपदेशगम्यम् । जनाश्च शास्त्रपठनेनैव तज्ज्ञातुं क्लिश्यंति । किंच शास्त्रस्य तत्त्वमस्यादिमहावाक्यरूपवेदांतस्य सद्भावः भागत्यागलक्षणया अभेदप्रतिपादकश्रेष्ठाशयः । व्याख्यां च तस्य तत्त्वमसीति काक्वा वेत्यन्यथैव कुर्वंति ॥ ७६ ॥ केचिद्धूर्तास्तु उपदेशादि । आदिशब्देन प्रणिपातादयस्तैर्वर्जिताश्च स्वानुभवं विनैव उन्मनीभावं उपशममुद्रया ब्रह्मपरत्वं कथयंति ।

अन्यथा परमं तत्त्वं जनाः क्लिश्यंति चान्यथा ॥ अन्यथा शास्त्रसद्भावो व्याख्यां कुर्वंति चान्यथा ॥ ७६ ॥
कथयंत्युन्मनीभावं स्वयं नानुभवंति च ॥ अहंकाररताः केचिदुपदेशादिवर्जिताः ॥ ७७ ॥
पठंति वेदशास्त्राणि बोधयंति परस्परम् ॥ न जानंति परं तत्त्वं दर्वी पाकरसं यथा ॥ ७८ ॥
शिरो वहति पुष्पाणि गंधं जानाति नासिका ॥ पठंति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ ७९ ॥
तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति ॥ गोपः कुक्षिगते छागे कूपे पश्यति दुर्मतिः ॥ ८० ॥

तर्हि गुरूपदेशं किमर्थं न गृह्णंतीत्यत आह–अहंकाररता इति । पंडिता वयं किं नु वः पृच्छामः सेवयाम इत्यभिमानपराः । अतः 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति भगवदुक्तात्मज्ञानसाधनरहिताश्च ते नानुभवंतीत्यर्थः ॥ ७७ ॥ किंच गुरूपदेशं विना पठनपाठनात्तत्त्वज्ञानं न भवतीत्याह–पठंतीति ॥ ७८ ॥ किंच भारवाहकवच्छास्त्राशयबोद्धा नास्ति, अतस्तत्त्वं न जानातीत्याह–शिर इति ॥ ७९ ॥ किंचात्मस्थतत्त्वज्ञानं विना शास्त्रेषु ज्ञानं मोहमात्रमेवेत्याह–तत्त्वमिति ॥ ८० ॥ ॥ ॥ ॥ ॥

किंच स्वानुभवं विना शब्दबोधेनैवात्मत्वनिरूपणात् ज्ञानं न निवर्तेत । किंतु तज्ज्ञानप्रकाशेनेत्याह—संसारेति ॥ ८१ ॥ अतो वैशारदी बुद्धिमतामेव शास्त्रात्तत्त्वज्ञानं भवति । बुद्धिहीनस्य नेत्याह—प्रज्ञेति ॥ ८२ ॥ ॥ ८३ ॥ 'अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः । सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः' इति । दत्तमतमवलंब्याह— इदमिति द्वाभ्याम् । सारं तत्त्वज्ञानम् ॥ ८४ ॥ किंच शास्त्राण्यभ्यस्य पूर्वं दुरवगमात्मतत्त्वग्रहणाय अधीत्य पश्चात् ज्ञानोत्तरं संत्यजेत् । परतस्तु नाधी-

संसारमोहनाशाय शब्दबोधो नहि क्षमः ॥ न निवर्तेत तिमिरं कदाचिद्दीपवार्तया ॥ ८१ ॥
प्रज्ञाहीनस्य पठनं यथांधस्य च दर्पणम् ॥ अतः प्रज्ञावतां शास्त्रं तत्त्वज्ञानस्य लक्षणम् ॥ ८२ ॥
इदं ज्ञानमिदं ज्ञेयं सर्वं तु श्रोतुमिच्छति ॥ दिव्यवर्षसहस्रायुः शास्त्रांतं नैव गच्छति ॥ ८३ ॥
अनेकानि च शास्त्राणि स्वल्पायुर्विघ्नकोटयः ॥ तस्मात्सारं विजानीयात्क्षीरं हंस इवांभसि ॥ ८४ ॥
अभ्यस्य वेदशास्त्राणि तत्त्वं ज्ञात्वाऽथ बुद्धिमान् ॥ पलालमिव धान्यार्थी सर्वशास्त्राणि संत्यजेत् ॥८५॥
यथाऽमृतेन तृप्तस्य नाहारेण प्रयोजनम् ॥ तत्त्वज्ञस्य तथा तार्क्ष्य ! न शास्त्रेण प्रयोजनम् ॥ ८६ ॥

यीत । तदुक्तं पंचमे—छंदांस्यध्यापयिष्यन् सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीग्रैष्मवासंतिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास इति । विष्णुपुराणे च—'न पपाठ गुरुप्रोक्तं कृतोपनयनं श्रुतम् ॥ न ददर्श च कर्माणि शास्त्राणि च गृहे न च' इति 'नाधीयीत बहून्शब्दान्वाचो विग्लापनं हि तत्' इति भगवद्वचनं चेति ॥ ८५ ॥ शास्त्रेण 'अहरहः संध्यामुपासीत' इति विधिप्रतिपादकप्रवृत्तिरूपेण प्रयोजनं दत्तवदावश्यकत्वं नास्ति । अत्रौपनिषदीयमाख्यायिका—'जनकः कदाचित्संध्या-

समये स्वेच्छया पर्यटंतं दत्तमिदमपृच्छत्। भो भगवन्! भवान्ब्राह्मणोऽसि, अतः संध्यावंदनं किमर्थं न करोषीति तदा सहोवाच 'हृदाकाशे चिदादित्यो वर्तते च निरंतरम्। नास्तमेति न चोदेति कथं संध्यामुपास्महे। मृता पितामहीमाया जातो विज्ञानबालकः। सूतके पातके प्राप्ते कथं संध्यामुपास्महे' इति ॥ ८६ ॥ अप्रयोजनमेवाह–अध्ययनादीनां ज्ञानं विना मोक्षे अनुपयोगात् 'ऋते ज्ञानान्न मुक्तिः' 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय' इत्यादिश्रुतेः। प्रमाणं दर्शयति–नेति द्वाभ्याम्। उक्तं च श्रीमदाचार्यचरणैरप्यात्मबोधे–'बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम्। पाकस्य वह्निवज्ज्ञानं

न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि ॥ ज्ञानादेव हि कैवल्यं नान्यथा विनतात्मज! ॥ ८७ ॥
नाश्रमः कारणं मुक्तेर्दर्शनानि न कारणम् ॥ तथैव सर्वकर्माणि ज्ञानमेव हि कारणम् ॥ ८८ ॥
मुक्तिदा गुरुवागेका विद्या सर्वाविडंबका ॥ काष्ठभारसहस्रेषु ह्येकं संजीवनं परम् ॥ ८९ ॥
अद्वैतं हि शिवं प्रोक्तं क्रियायासविवर्जितम् ॥ गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः ॥ ९० ॥

विना मोक्षो न सिध्यति' इति ॥ ८७ ॥ किंच ज्ञानशून्यसंन्यासाश्रमादयोऽपि मुक्तेः कारणं नेत्याह–नाश्रम इति ॥ ८८ ॥ एतज्ज्ञानं गुरूपदिष्टमेव मोक्षकारणं भवति, नतु शास्त्राध्ययनजन्यम्। अतः तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिप्रणीतगुरूपदेशेनैव गृह्णीयादित्याह–मुक्तिदेति द्वाभ्याम्। एका अद्वैतात्मज्ञानोपदेशिका गुरुवागनुकरणकारकैव नत्वनुभवदायिकेत्यर्थः। यथा संजीवनं नाम काष्ठं जीवनप्रदत्वादेकमपि श्रेष्ठम् ॥ ८९ ॥ 'शिवमद्वैतं तुरीयं मन्यंते' इति श्रुत्युक्तं ब्रह्मगुरुवक्त्रेण गुरूपदेशेन तु क्रियायासमिवर्जितम्। अध्ययनादिकर्मप्रयासरहितं यथा स्यात्तथैव

लभ्येत प्राप्नोति, अन्यथानंतशास्त्राध्ययनेनापि नानुभवतीत्यर्थः ॥ ९० ॥ अत्र परोक्षत्वापरोक्षत्वेन ज्ञानस्य द्वैविध्यमाह–आगमोक्तं शास्त्राध्ययनाज्जातमात्रं यथास्मदादीनां तत्परोक्षज्ञानं शब्दब्रह्मसंज्ञकं भवति । किंच विवेकोत्थं वस्तुविवेकात्स्वयमेवोत्पन्नं यथा सिद्धगीताश्रवणेनैव जातं जनकादीनां तदपरोक्षज्ञानं परब्रह्मसंज्ञकं भवतीत्यर्थः ॥ ९१ ॥ केचिच्छंकरानुयायिनः शैवाः स्वाभिमतेनाद्वैतमेव प्रतिपादयंति । अपरे मध्वाद्यनुगा वैष्णवाभिमानिनो द्वैतं चेति । किंतु द्वैताद्वैतमतदुराग्रहवर्जितं तत्त्वं स्वानुभवगम्यं शिवमद्वैतसमं सर्वमतानुस्यूतं न जानंति । तदुक्तं कुसुमदशनेन–'त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने

आगमोक्तं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते ॥ शब्दब्रह्मागममयं परब्रह्मविवेकजम् ॥ ९१ ॥
अद्वैतं केचिदिच्छंति द्वैतमिच्छंति चापरे ॥ समं तत्त्वं न जानंति द्वैताद्वैतविवर्जितम् ॥ ९२ ॥
द्वे पदे बंधमोक्षाय न ममेति ममेति च ॥ ममेति बध्यते जंतुर्न ममेति प्रमुच्यते ॥ ९३ ॥
तत्कर्म यन्न बंधाय सा विद्या या विमुक्तिदा ॥ आयासायापरं कर्म विद्यान्या शिल्पनैपुणम् ॥ ९४ ॥
यावत्कर्माणि दीयंते यावत्संसारवासना ॥ यावदिंद्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ ९५ ॥

प्रस्थाने परमिदमदः पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव' इति ॥ ९२ ॥ अतो ममेति ममत्वेन बंधकत्वाद्वृथा पांडित्यमेवेत्याह–द्वे इति । कलत्रादिममत्वेन वा ॥ ९३ ॥ किंच कर्म तु तदेव यद्बंधाय न भवति । विद्यापि सैव या मुक्तिप्रदा भवतीति । अपरं बंधकं कर्म तु आयासाय तुषावघातवत् खेदायैव । अन्याऽध्यात्मविद्यातिरिक्ता शिल्पनैपुणं हर्म्यादिनिर्माणचातुर्यवद्भवतीति ॥ ९४ ॥ तत्त्वज्ञानेऽन्तरायानाह–यावदिति त्रिभिः । दीयंते

फलोन्मुखानि भवंति। ज्ञानाग्निना न दग्धानीत्यर्थः ॥ ९५ ॥ यावत्प्रयत्नवेगः रजसोद्योगोऽस्ति। कल्पना अघटघटना। तत्त्वकथा तत्त्वज्ञानस्य वार्तापि कुतः ? तत्त्वज्ञानं कदाचिदपि न भवतीत्यर्थः ॥ ९६ ॥ ९७ ॥ तत्त्वं आत्मज्ञानं यावन्न विंदति तावदेव तपआदीनि कर्तव्यानि। तत्त्वे ज्ञाते तु तपआदि सर्वं कर्म तस्मिन्नेवांतर्भवतीति भावः। तदुक्तं भगवता—'सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते' इति। श्रुतिश्च 'सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वंति' इति। ज्ञानार्णवेऽप्युक्तं च 'स्नातं तेन

यावद्देहाभिमानश्च ममता यावदेव हि ॥ यावत्प्रयत्नवेगोऽस्ति यावत्संकल्पकल्पना ॥ ९६ ॥
यावन्नो समनःस्थैर्यं न यावच्छास्त्रचिंतनम् ॥ यावन्न गुरुकारुण्ये तावत्तत्त्वकथा कुतः ॥ ९७ ॥
तावत्तपो व्रतं तीर्थं जपहोमार्चनादिकम् ॥ वेदशास्त्रागमकथा यावत्तत्त्वं न विंदति ॥ ९८ ॥
तस्मात्सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ॥ तत्त्वनिष्ठो भवेत्तार्क्ष्य ! यदीच्छेन्मोक्षमात्मनः ॥ ९९ ॥
धर्मज्ञानप्रसूनस्य स्वर्गमोक्षफलस्य च ॥ तापत्रयादिसंतप्तश्छायां मोक्षतरोः श्रयेत् ॥ १०० ॥

समस्ततीर्थनिचये सर्वापि दत्तावनिर्यज्ञानां च कृतं सहस्रमयुतं देवाश्च संतर्पिताः। संसाराच्च समुद्धृताः स्वपितरः सर्वस्य पूज्यो ह्यसौ यस्य ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्यं मनः' इति ॥ ९८ ॥ तस्मात्तत्त्वनिष्ठो भवेदिति संबंधः ॥ ९९ ॥ उपासनाधर्मो ज्ञानं च प्रसूनं यस्य बीजास्पदत्वात् स्वर्गादिभोगफलं यस्येति यत्र; अनायासेनैव सर्वसुखावाप्तिर्भवतीत्यर्थः। अध्यात्मादितापत्रयोपसंतप्तः आध्यात्मिकं ज्वरादि, आधिदैविकं उष्णादि, आधिभौतिकं दुर्जनादि। छायां श्रयेत् मोक्षसुखं सदैव वांछेदित्यर्थः ॥ १०० ॥

आत्मज्ञानादेव मुक्तिर्भवतीत्युपसंहरति–तस्मादिति ॥ १ ॥ एवं तत्त्वज्ञानान्मोक्षं प्रतिपाद्य अधुना तत्त्वज्ञस्यातुरकृत्यं निरूपयति–अंतकाल इति षड्भिः ॥ २ ॥ गतसाध्वसः मृत्युभयशून्यः असंगो नाम अनासक्तिस्तेन शस्त्रेण स्पृहां सुखेच्छां तं देहं अनु ये पुत्रकलत्रादयस्तेष्वपि स्पृहां छिंद्यात् । देहादिषु वीतरागो भवेदित्यर्थः ॥ ३ ॥ किंच गृहात्प्रव्रजितो निर्गतः गृहे स्थितस्य पुनरप्यासक्तिसंभवात् । तत्र कृत्यमाह–शुचाविति । विविक्ते एकान्ते विधिवत् कुशाजिनचैलैः क्रमेण

तस्माज्ज्ञानेनात्मतत्त्वं विज्ञेयं श्रीगुरोर्मुखात् ॥ सुखेन मुच्यते जंतुर्घोरसंसारबंधनात् ॥ १ ॥
तत्त्वज्ञस्यांतिमं कृत्यं शृणु वक्ष्यामि तेऽधुना ॥ येन मोक्षमवाप्नोति ब्रह्मनिर्वाणसंज्ञकम् ॥ २ ॥
अंतकाले तु पुरुष आगते गतसाध्वसः ॥ छिंद्यादसंगशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ ३ ॥
गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ॥ शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ ४ ॥
अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ॥ मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन् ॥ ५ ॥
नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः ॥ मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥ ६ ॥
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले ॥ ७ ॥

निर्मिते ॥ ४ ॥ त्रिवृत् अकारोकारमकारात्मकम् ॥ ५ ॥ बुद्धिर्वैशारदी स सारथिः सहायभूता यस्य सः । शुभार्थे भगवद्रूपे ॥ ६ ॥ एवं चक्षुरादिभिर्मनसा च बाह्यविषयग्रहणं स्मरणं च विहाय ब्रह्माहमस्मीत्यनुभववाक्यार्थं विभावयेदित्याह–अहमिति । योऽहं स ब्रह्मैव यद्ब्रह्म तदहमेवेति समीक्ष्य तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ।

ब्रह्माहमिति भावनया ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यवहारो दर्शितः। ततश्च निष्कले निरुपाधौ आत्मनि ब्रह्मणि आत्मानं मन आधाय स्थिरीकृत्य ॥ ७ ॥ तत ओमित्येकं यदक्षरं तदेव ब्रह्म तदुच्चारयन्नेव देहं त्यजन् यः प्रकर्षेण याति अर्चिरादिमार्गेण सः परमां श्रेष्ठां मद्गतिमेव याति, पुनर्दुःखालयमशाश्वतं जन्म न प्राप्नोतीति द्वयोरर्थः ॥ ८ ॥ किंच एवं अंतकाले धारणया मत्प्राप्तिर्नित्याभ्यासवतां ज्ञानिनामेव भवति, नान्येषामित्याह–न यत्रेति षड्भिः ॥ ९ ॥ निर्मानेति। निर्गतौ मानमोहौ अहं-कारमिथ्याभिनिवेशौ येभ्यस्ते। जितः पुत्रकलत्राद्यासक्तिरूपो दोषो यैः। अध्यात्मे आत्मज्ञाने नित्याः परिनिष्ठिताः विशेषेण

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥ यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ ८ ॥
न यत्र दांभिका यांति ज्ञानवैराग्यवर्जिताः ॥ सुधियस्तां गतिं यांति तानहं कथयामि ते ॥ ९ ॥
निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ॥ द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छंत्य-
मूढाः पदमव्ययं तत् ॥ ११० ॥ ज्ञानहृदे सत्यजले रागद्वेषमलापहे ॥ यः स्नाति मानसे
तीर्थे स वै मोक्षमवाप्नुयात् ॥ ११ ॥ ॥ ॥ ॥

निवृत्तः कामोऽभिलाषो येभ्यस्ते सुखदुःखहेतुत्वात्। सुखदुःखसंज्ञानि शीतोष्णादीनि द्वंद्वानि तैर्मुक्ताः अत एव अमूढा निवृत्ताविद्याः विवेकिनस्तदव्ययं पदं गच्छंति 'तद्विष्णोः परमं पदं सदा पश्यंति सूरयः' इति श्रुत्युक्तम्। किंच 'न तद्भासयते सूर्यो न शशांको न पावकः। यद्गत्वा न निवर्तंते तद्धाम परमं मम' इति भगवदुक्तस्वरूपे लीना भवंतीत्यर्थः ॥ ११० ॥ ज्ञानमेव हृदो निखातो यस्य सत्यं ब्रह्म तदेव जलं यस्मिन्मानसे हृदि देहांतर्गते एव तीर्थे, नतु बाह्ये ॥ ११ ॥

किंच मद्भक्तिस्तु स्वतंत्रापि मुक्तिहेतुः, किं पुनर्ज्ञानवैराग्ययुक्तेत्याह–प्रौढमिति । 'ब्रह्मादिस्थावरांतेषु वैराग्यविषयेष्वनु । यथैव काकविष्ठायां वैराग्यं प्रौढमुच्यते' एतदास्थाय धृत्वा अनन्यभाक् वासुदेवः सर्वमिति बुद्ध्या अन्यमजानन्नित्यर्थः । पूर्णदृष्टिः पूर्णे व्यापके ब्रह्मणि दृष्टिर्यस्य । अत एव प्रसन्नः आत्मा मनो यस्येति ॥ १२ ॥ मरणोत्सुकः 'कृतकृत्याः प्रतीक्षंते मृत्युं प्रियमिवातिथिम्' इत्युत्कंठितो यस्तीर्थे निवसन्नेव म्रियते ॥ १३ ॥ अयोध्यादिसप्तमुक्तिक्षेत्राण्याह–अयोध्येति ॥ १४ ॥

प्रौढं वैराग्यमास्थाय भजते मामनन्यभाक् ॥ पूर्णदृष्टिः प्रसन्नात्मा स वै मोक्षमवाप्नुयात् ॥ १२ ॥
त्यक्त्वा गृहं च यस्तीर्थे निवसेन्मरणोत्सुकः ॥ म्रियते मुक्तिक्षेत्रेषु स वै मोक्षमवाप्नुयात् ॥ १३ ॥
अयोध्या मथुरा माया काशी कांची अवंतिका ॥ पुरी द्वारावती ज्ञेयाः सप्तैता मोक्षदायिकाः ॥ १४ ॥
इति ते कथितं तार्क्ष्य ! मोक्षधर्मं सनातनम् ॥ ज्ञानवैराग्यसहितं श्रुत्वा मोक्षमवाप्नुयात् ॥ १५ ॥
मोक्षं गच्छंति तत्त्वज्ञा धार्मिकाः स्वर्गतिं नराः ॥ पापिनो दुर्गतिं यांति संसरंति खगादयः ॥ १६ ॥
इत्येवं सर्वशास्त्राणां सारोद्धारो निरूपितः ॥ मया ते षोडशाध्यायैः किं भूयः श्रोतुमिच्छसि ॥ १७ ॥

मोक्षोपायमुपसंहरति–इतीति ॥ १५ ॥ सकलग्रंथप्रतिपादितार्थमाह–मोक्षमिति । अत्रैवं प्रक्रिया तत्त्वज्ञानेन तु पुनरावृत्तिरहिता विदेहमुक्तिर्भवतीति । श्रद्धादिधर्मैश्च स्वर्गभोगानंतरमावृत्तिः । निषिद्धकर्मभिस्तु नरकभोगानंतरमावृत्तिः । खगादयः पक्षिपशुकीटकादयः क्षुद्रजीवास्तु संसरंति । अत्रैव पुनःपुनर्जन्ममरणे लभंते इति ग्रंथार्थसंग्रहः ॥ १६ ॥ पुनरपि महदनुकंपया श्रवणेच्छामाविष्करोति–किमिति ॥ १७ ॥ ॥ ॥ ॥ ॥

सूतः शौनकं प्रति गरुडस्य कृतार्थतामाह—एवमिति त्रिभिः । ध्यानपरः अंतर्मुखवृत्त्यात्मतत्त्वानुभवपरायण एवाभून्नतु श्रवणेच्छा जातेत्यर्थः ॥ १८ ॥ १९ ॥ १२० ॥ इदानीं 'ग्रंथारंभे च ग्रंथांते ग्रंथकर्ता स्तवेद्धरिम्' इति सत्संप्रदायानुरोधेन ग्रंथार्थमुद्घाटयन् हरिं स्तौति—यः स्वनामस्मरणादेव प्रथमादिषडध्यायोक्तदुर्गातिं मन्वादिकोक्तप्रायश्चित्तं विनैव हरतीति हर्ता स्वपूजनमेव यज्ञस्तेनैव द्रव्ययज्ञातुरदानादिकं विनैव सप्तमादिनवाध्यायोक्तसद्गतेर्दाता भवतीति । किंच परया निर्गुण-

॥ सूत उवाच ॥ एवं श्रुत्वा वचो राजन्गरुडो भगवन्मुखात् ॥ कृतांजलिरुवाचेदं तं प्रणम्य मुहुर्मुहुः ॥ १८ ॥ भगवन्देवदेवेश ! श्रावयित्वा वचोऽमृतम् ॥ तारितोऽहं त्वया नाथ ! भव-सागरतः प्रभो ! ॥ १९ ॥ स्थितोऽस्मि गतसंदेहः कृतार्थोऽस्मि न संशयः ॥ इत्युक्त्वा गरुड-स्तूष्णीं स्थित्वा ध्यानपरोऽभवत् ॥ १२० ॥ स्मरणाद्दुर्गतिहर्ता पूजनयज्ञेन सद्गतेर्दाता ॥ यः परया निजभक्त्या ददाति मुक्तिं स मां हरिः पातु ॥ १२१ ॥ इति श्रीगरुडपुराणे सारोद्धारे भगवद्गरुडसंवादे मोक्षधर्मनिरूपणो नाम षोडशोऽध्यायः ॥ १६ ॥ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

सर्वधर्मोत्तमया निजभक्त्यैव एतदध्यायोक्ततत्त्वज्ञानं विनैव मुक्तिं ददाति स हरिर्मां पातु जन्ममरणाद्रक्षतु ॥ १२१ ॥ इयं नौनिधिरामेण मया टीका कृतादरात् । अनया रमया सार्धं प्रीयतां मधुसूदनः ॥ १ ॥ ॥ इति श्रीगरुडपुराणे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ ॥ ॥

# अथ गरुडपुराणश्रवणफलम् ॥





॥ श्रीगणेशाय नमः ॥ ॥ श्रीभगवानुवाच । इत्याख्यातं मया तार्क्ष्य ! सर्वमेवौर्ध्वदेहिकम् ॥ दशाहाभ्यंतरे श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १ ॥ इदं चामुष्मिकं कर्म पितृमुक्तिप्रदायकम् ॥ पुत्रवांछितदं चैव परत्रेह सुखप्रदम् ॥ २ ॥ इदं कर्म न कुर्वंति ये नास्तिकनराधमाः ॥ तेषां जलमपेयं स्यात्सुरातुल्यं न संशयः ॥ ३ ॥ देवताः पितरश्चैव नैव पश्यंति तद्गृहम् ॥ भवंति तेषां कोपेन पुत्राः पौत्राश्च दुर्गताः ॥ ४ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवेतरेऽपि च ॥ ते चांडालसमा ज्ञेयाः सर्वे प्रेतक्रियां विना ॥ ५ ॥ प्रेतकल्पमिदं पुण्यं शृणोति श्रावयेच्च यः ॥ उभौ तौ पापनिर्मुक्तौ दुर्गतिं नैव गच्छतः ॥ ६ ॥ मातापित्रोश्च मरणे सौपर्णं शृणुते तु यः ॥ पितरौ मुक्तिमापन्नौ सुतः संततिमान्भवेत् ॥ ७ ॥ न श्रुतं गारुडं येन गयाश्राद्धं च नो कृतम् ॥ वृषोत्सर्गः कृतो नैव न च मासिकवार्षिके ॥ ८ ॥ स कथं कथ्यते पुत्रः कथं मुच्येदृणत्रयात् ॥ मातरं पितरं चैव कथं तारयितुं क्षमः ॥ ९ ॥ तस्मात्सर्वप्रयत्नेन श्रोतव्यं गारुडं किल ॥ धर्मार्थकाममोक्षाणां दायकं दुःखनाशनम् ॥ १० ॥ पुराणं गारुडं पुण्यं पवित्रं पापनाशनम् ॥ शृण्वतां कामनापूरं श्रोतव्यं सर्वदैव हि ॥ ११ ॥ ब्राह्मणो लभते विद्यां क्षत्रियः पृथिवीं लभेत् ॥ वैश्यो धनिकतामेति शूद्रः शुध्यति पातकात् ॥ १२ ॥ श्रुत्वा दानानि देयानि वाचकायाखिलानि च ॥ पूर्वोक्तशयनादीनि नान्यथा सफलं भवेत् ॥ १३ ॥ पुराणं पूजयेत्पूर्वं वाचकं तदनंतरम् ॥ वस्त्रालंकारगोदानैर्दक्षिणाभिश्च सादरम् ॥ १४ ॥ अन्नश्च हेमदानैश्च भूमिदानैश्च भूरिभिः ॥ पूजयेद्वाचकं भक्त्या वहुपुण्यफलाप्तये ॥ १५ ॥ वाचकस्यार्चने-नैव पूजितोऽहं न संशयः ॥ संतुष्टे तुष्टितां यामि वाचके नात्र संशयः ॥ १६ ॥ इति श्रीगरुडपुराणे श्रवणफलम् ॥ ॥

॥ आसीद्वक्ता पुराणस्य श्रीशार्दूलमहीपतेः ॥ झुंझुणूनगरस्यापि मिश्रः श्रीसुखलालजी ॥ १ ॥ तस्य श्रीहरिनारायणात्मजस्तत्सुतेन तु ॥ मया नौनिधिरामेण कृतोऽयं सारसंग्रहः ॥ २ ॥ प्राचीनैर्यत्कृतः पूर्वं गारुडः सारसंग्रहः ॥ स तु नो बुद्धिदौर्बल्याज्ज्ञातस्तस्मादयं कृतः ॥ ३ ॥ पुनरुक्तिं परित्यज्य क्रमेणायं मया कृतः ॥ बालानां सुखबोधाय न तु पांडित्यगर्वतः ॥ ४ ॥ अत्राप्रमाणं यत्किंचित्प्रमादाल्लिखितं मया ॥ विद्वद्भिः सुविचार्यैव शोधनीयोऽनसूयिभिः ॥ ५ ॥ सारोद्धारो मया मूलैर्बहुग्रंथैर्यथा कृतः ॥ तथैवानेकटीकाभिरुद्धृतः सारसंग्रहः ॥ ६ ॥ महाखेदान्मया तत्र यथास्थानं नियोजितः ॥ प्राज्ञं विना प्रयासं मे को ज्ञास्यति विमूढधीः ॥ ७ ॥ विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ॥ नहि वंध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ ८ ॥ ये पूर्वसंग्रहे मूढा नैव जानंति योग्यताम् ॥ ते कथं हि भविष्यंति हर्षिताः पठनेऽस्य च ॥ ९ ॥ सारोद्धारमिमं मिश्राः पठंतु न पठंतु वा ॥ मया तु स्वीयबोधाय कृतमेतन्न सर्वशः ॥ १० ॥ मंगलं भगवान्विष्णुर्मंगलं गरुडध्वजः ॥ मंगलं पुंडरीकाक्षो मंगलायतनो हरिः ॥ ११ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ १२ ॥ राजानः परिपालयंतु वसुधां धर्मे स्थिताः सर्वदा पृथ्वी कामदुघा भवत्वविरलं वर्षंतु काले घनाः । ईर्ष्यामुज्झतु दुर्जनः परगुणेष्वासज्जतां सज्जनः सत्काव्यामृतवर्षिणी कविमुखे वाणी चिरं नंदतु ॥ १३ ॥ इति श्रीगरुडपुराणे स्वकृतश्लोकाः समाप्ताः ॥ ॥ ॥ ॥ ॥ ॥





ग्रन्थोऽयं काव्यतीर्थेत्युपाध्यलङ्कृत–आचार्योपाभिधरामात्मजनारायणशर्मणा संस्कृतः, स च सत्यभामाबाई पांडुरंग इत्येताभि-र्मुम्बय्यां "निर्णयसागरा"ख्यमुद्रणयन्त्रालयकृते मुद्रापयित्वा प्राकाश्यं नीतः ॥

शकाब्दाः १८७१ : सन १९४९

Published by Satyabhamabai Pandurang, for the "Nirnaya-sagar Press", 26–28, Kolbhat Street, Bombay.

Printed by Ramachandra Yesu Shedge, at the "Nirnaya-sagar Press", 26–28, Kolbhat Street, Bombay.

